**आरती—ॐ नमः शिवाय, श्रीभगवते साम्बसदाशिवाय नमः, आरार्तिक्यं समर्पयामि।** (आरती करे, जल गिरा दे।)

**मन्त्रपुष्पाञ्जलि—ॐ नमः शिवाय, श्रीभगवते साम्बसदाशिव-पार्थिवेश्वराय नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि।**

(पुष्पाञ्जलि समर्पित करे।)

## अष्टमूर्तियोंकी पूजा

अब गन्ध, अक्षत, फूलके द्वारा भगवान् शंकरकी आठों मूर्तियोंकी आठों दिशाओंमें पूजा करे—

१-पूर्वदिशामें (पृथ्वीरूपमें)—**ॐ शर्वाय क्षितिमूर्तये नमः।**

२-ईशानकोणमें (जलरूपमें)—**ॐ भवाय जलमूर्तये नमः।**

३-उत्तरदिशामें (अग्निरूपमें)—**ॐ रुद्राय अग्निमूर्तये नमः।**

४-वायव्यकोणमें (वायुरूपमें)—**ॐ उग्राय वायुमूर्तये नमः।**

५-पश्चिमदिशामें (आकाशरूपमें)—**ॐ भीमाय आकाशमूर्तये नमः।**

६-नैर्ऋत्यकोणमें (यजमानरूपमें)—**ॐ पशुपतये यजमानमूर्तये नमः।**

७-दक्षिणदिशामें (चन्द्ररूपमें)—**ॐ महादेवाय सोममूर्तये नमः।**

८-अग्निकोणमें (सूर्यरूपमें)—**ॐ ईशानाय सूर्यमूर्तये नमः।**

इसके बाद '**ॐ नमः शिवाय**' मन्त्रका कम-से-कम एक माला अथवा दस बार जप करे। उसके बाद—

**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।**
**सिद्धिर्भवतु मे देव! त्वत्प्रसादान्महेश्वर॥**

—यह मन्त्र पढ़कर देवताके दक्षिण हाथमें जपको समर्पित करे।

**प्रदक्षिणा—यानि कानि च पापानि जन्मान्तरकृतानि च।**
**तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे॥**

**क्षमा-प्रार्थना—आवाहनं न जानामि न जानामि विसर्जनम्।**
**पूजां नैव हि जानामि क्षमस्व परमेश्वर॥**
**मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर।**
**यत् पूजितं महादेव! परिपूर्णं तदस्तु मे॥**
**त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव।**
**त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥**
(क्षमा-प्रार्थना करे।)

**विसर्जन—गच्छ गच्छ सुरश्रेष्ठ! स्वस्थाने परमेश्वर।**
**मम पूजां गृहीत्वेमां पुनरागमनाय च॥***

**ॐ विष्णवे नमः, ॐ विष्णवे नमः, ॐ विष्णवे नमः॥** (ऐसा कहकर विसर्जन करे।)

**समर्पण—अनेन पार्थिवलिङ्गपूजनकर्मणा श्रीयज्ञस्वरूपः शिवः प्रीयताम्, न मम।** (पूजनकर्म समर्पण करे।)

## ज्ञातव्य बातें

(१) शिवकी प्रदक्षिणाके लिये शास्त्रका आदेश है कि इनकी अर्धप्रदक्षिणा करनी चाहिये। आचारेन्दुमें 'अर्ध'का अर्थ—'**अर्धं सोमसूत्रान्तमित्यर्थः**' 'सोमसूत्रतक' ऐसा किया गया है। '**शिवं प्रदक्षिणीकुर्वन् सोमसूत्रं न लङ्घयेत्, इति वचनान्तरात्।**'

**अपवाद**—तृण, काष्ठ, पत्ता, पत्थर, ईंट आदिसे ढके सोमसूत्रका लंघन किया जा सकता है।

(२) दुर्गाजीकी एक, सूर्यकी सात, गणेशकी तीन, विष्णुकी चार और शिवकी अर्ध प्रदक्षिणा करनी चाहिये।

**एका चण्ड्या रवेः सप्त तिस्रः कार्या विनायके।**
**हरेश्चतस्रः कर्तव्याः शिवस्यार्धप्रदक्षिणा॥**

---

* तीर्थजलमें अथवा किसी पवित्र स्थानमें विसर्जन करना चाहिये।

( ३ ) [ क ]—पूजनमें जिस सामग्रीकी कमी हो, उसकी पूर्ति मानसिक भावनासे करनी चहिये—'**असम्पन्नं मनसा सम्पादयेत्।**' जैसे—**आसनं मनसा परिकल्पयामि, पुष्पमालां मनसा परिकल्पयामि इत्यादि।**

[ ख ]—दूसरा विकल्प है, उस-उस सामग्रीके लिये अक्षत-फूल चढ़ा दे या जल चढ़ा दे—

**तत्तद् द्रव्यं तु संकल्प्य पुष्पैर्वापि समर्चयेत्।**
**अर्चनेषु विहीनं यत् तत्तोयेन प्रकल्पयेत्॥**

[ ग ]—केवल नैवेद्य चढ़ानेसे अथवा केवल चन्दन, फूल चढ़ानेसे भी पूजा मान ली जाती है।

**'केवलनैवेद्यसमर्पणेनैव पूजासिद्धिरिति .........।**
**गन्धपुष्पसमर्पणमात्रेण पूजासिद्धिरित्यपि पूर्वे।'**

(आचारेन्दु)

# स्तुति-प्रकरण

## श्रीसङ्कष्टनाशनगणेशस्तोत्रम्

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्।
भक्तावासं स्मरेन्नित्यमायुष्कामार्थसिद्धये॥ १॥

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम्।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम्॥ २॥

लम्बोदरं पञ्चमं च षष्ठं विकटमेव च।
सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम्॥ ३॥

नवमं भालचन्द्रं च दशमं तु विनायकम्।
एकादशं गणपतिं द्वादशं तु गजाननम्॥ ४॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः।
न च विघ्नभयं तस्य सर्वसिद्धिकरं परम्॥ ५॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम्॥ ६॥

जपेद् गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्।
संवत्सरेण सिद्धिं च लभते नात्र संशयः॥ ७॥

अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्।
तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादतः॥ ८॥

॥ श्रीनारदपुराणे सङ्कष्टनाशनं नाम गणेशस्तोत्रं सम्पूर्णम्॥

# श्रीगणपत्यथर्वशीर्षम्

## ॐ भद्रङ्कर्णेभिरिति शान्तिः

हरिः ॐ ॥ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अव चोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि वाक्पदानि। त्वं गुणत्रयातीतः। त्वं कालत्रयातीतः। त्वं देहत्रयातीतः। त्वं मूलाधारस्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः सुवरोम्। गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्॥ १॥ तारेण रुद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः सन्धानम्। संहिता सन्धिः। सैषा गणेशविद्या। गणक ऋषिः निचृद्गायत्री छन्दः। श्रीमहागणपतिर्देवता। ॐ गम्। ( गणपतये नमः। ) एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्। अभयं वरदं हस्तैर्बिभ्राणं मूषकध्वजम्॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्। आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः।

नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदराय़ैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमो नमः॥ एतदथर्वशिरो योऽधीते स ब्रह्मभूयाय कल्पते। स सर्वविघ्नैर्न बाध्यते। स सर्वतः सुखमेधते। स पञ्चमहापातकोपपातकात् प्रमुच्यते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायं प्रातः प्रयुञ्जानोऽपापो भवति। धर्मार्थकाममोक्षं च विन्दति। इदमथर्वशीर्षमशिष्याय न देयम्। यो यदि मोहाद्दास्यति स पापीयान् भवति। सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत्। अनेन गणपतिमभिषिञ्चति स वाग्मी भवति। चतुर्थ्यामनश्नञ्जपति स विद्यावान् भवति। इत्यथर्वणवाक्यम्। ब्रह्माद्याचरणं विद्यात्। न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान् भवति। स मेधावान् भवति। यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति। यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति। महाविघ्नात् प्रमुच्यते। महापापात् प्रमुच्यते। महादोषात् प्रमुच्यते। स सर्वविद्भवति। स सर्वविद्भवति। य एवं वेद॥ ॐ भद्रङ्कर्णेभिरिति शान्तिः॥

॥इति श्रीगणपत्यथर्वशीर्षम्॥

# गणेशपञ्चरत्नम्

मुदा करात्तमोदकं सदा विमुक्तिसाधकं
कलाधरावतंसकं विलासिलोकरञ्जकम्।
अनायकैकनायकं विनाशितेभदैत्यकं
नताशुभाशुनाशकं नमामि तं विनायकम्॥ १॥

नतेतरातिभीकरं नवोदितार्कभास्वरं
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम्।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम्॥ २॥

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं
दरेतरोदरं वरं वरेभवक्त्रमक्षरम्।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं
नमस्करं नमस्कृतां नमस्करोमि भास्वरम्॥ ३॥

अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनं
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम्।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं
कपोलदानवारणं भजे पुराणवारणम्॥ ४॥

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मज-
मचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम्।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेव तं विचिन्तयामि संततम्॥ ५॥

महागणेशपञ्चरत्नमादरेण योऽन्वहं
प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम्।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात्॥ ६॥

॥ श्रीमच्छङ्कराचार्यकृतं गणेशपञ्चरत्नस्तोत्रं सम्पूर्णम्॥

## श्रीसत्यनारायणाष्टकम्

आदिदेवं जगत्कारणं श्रीधरं लोकनाथं विभुं व्यापकं शङ्करम्।
सर्वभक्तेष्टदं मुक्तिदं माधवं सत्यनारायणं विष्णुमीशम्भजे॥ १॥
सर्वदा लोककल्याणपारायणं देवगोविप्ररक्षार्थसद्विग्रहम्।
दीनहीनात्मभक्ताश्रयं सुन्दरं सत्य०॥ २॥
दक्षिणे यस्य गङ्गा शुभा शोभते राजते सा रमा यस्य वामे सदा।
यः प्रसन्नाननो भाति भव्यश्च तं सत्य०॥ ३॥
सङ्कटे सङ्गरे यं जनः सर्वदा स्वात्मभीनाशनाय स्मरेत् पीडितः।
पूर्णकृत्यो भवेद् यत्प्रसादाच्च तं सत्य०॥ ४॥
वाञ्छितं दुर्लभं यो ददाति प्रभुः साधवे स्वात्मभक्ताय भक्तिप्रियः।
सर्वभूताश्रयं तं हि विश्वम्भरं सत्य०॥ ५॥
ब्राह्मणः साधुवैश्यश्च तुङ्गध्वजो येऽभवन् विश्रुता यस्य भक्त्यामराः।
लीलया यस्य विश्वं ततं तं विभुं सत्य०॥ ६॥
येन चाब्रह्मबालतृणं धार्यते सृज्यते पाल्यते सर्वमेतज्जगत्।
भक्तभावप्रियं श्रीदयासागरं सत्य०॥ ७॥
सर्वकामप्रदं सर्वदा सत्प्रियं वन्दितं देववृन्दैर्मुनीन्द्रार्चितम्।
पुत्रपौत्रादिसर्वेष्टदं शाश्वतं सत्य०॥ ८॥
अष्टकं सत्यदेवस्य भक्त्या नरः भावयुक्तो मुदा यस्त्रिसन्ध्यं पठेत्।
तस्य नश्यन्ति पापानि तेनाग्निना इन्धनानीव शुष्काणि सर्वाणि वै॥ ९॥

॥ श्रीसत्यनारायणाष्टकं सम्पूर्णम्॥

## श्रीआदित्यहृदयस्तोत्रम् *

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम्।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम्॥ १ ॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम्।
उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा॥ २ ॥

राम राम महाबाहो शृणु गुह्यं सनातनम्।
येन सर्वानरीन् वत्स समरे विजयिष्यसे॥ ३ ॥

---

* इस 'आदित्यहृदय' नामक स्तोत्रका विनियोग एवं न्यासविधि इस प्रकार है—

**विनियोग**

ॐ अस्य आदित्यहृदयस्तोत्रस्यागस्त्यऋषिरनुष्टुप्छन्दः, आदित्यहृदयभूतो भगवान् ब्रह्मा देवता निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्र जयसिद्धौ च विनियोगः।

**ऋष्यादिन्यास**

ॐ अगस्त्यऋषये नमः, शिरसि। अनुष्टुप्छन्दसे नमः, मुखे। आदित्यहृदयभूतब्रह्मदेवतायै नमः, हृदि। ॐ बीजाय नमः, गुह्ये। रश्मिमते शक्तये नमः, पादयोः। ॐ तत्सवितुरित्यादिगायत्रीकीलकाय नमः, नाभौ।

**करन्यास**

इस स्तोत्रके अङ्गन्यास और करन्यास तीन प्रकारसे किये जाते हैं। केवल प्रणवसे, गायत्री-मन्त्रसे अथवा 'रश्मिमते नमः' इत्यादि छः नाम-मन्त्रोंसे। यहाँ नाम-मन्त्रोंसे किये जानेवाले न्यासका प्रकार बताया जाता है—

ॐ रश्मिमते अङ्गुष्ठाभ्यां नमः। ॐ समुद्यते तर्जनीभ्यां नमः। ॐ देवासुरनमस्कृताय मध्यमाभ्यां नमः। ॐ विवस्वते अनामिकाभ्यां नमः। ॐ भास्कराय कनिष्ठिकाभ्यां नमः। ॐ भुवनेश्वराय करतलकरपृष्ठाभ्यां नमः।

**हृदयादि अंगन्यास**

ॐ रश्मिमते हृदयाय नमः। ॐ समुद्यते शिरसे स्वाहा। ॐ देवासुरनमस्कृताय शिखायै वषट्। ॐ विवस्वते कवचाय हुम्। ॐ भास्कराय नेत्रत्रयाय वौषट्। ॐ भुवनेश्वराय अस्त्राय फट्। इस प्रकार न्यास करके निम्नाङ्कित मन्त्रसे भगवान् सूर्यका ध्यान एवं नमस्कार करना चाहिये—

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्।

तत्पश्चात् 'आदित्यहृदय' स्तोत्रका पाठ करना चाहिये।

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम्।
जयावहं जपं नित्यमक्षयं परमं शिवम्॥ ४ ॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम्।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५ ॥

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम्।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम्॥ ६ ॥

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः।
एष देवासुरगणाँल्लोकान् पाति गभस्तिभिः॥ ७ ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः।
महेन्द्रो धनदः कालो यमः सोमो ह्यपाम्पतिः॥ ८ ॥

पितरो वसवः साध्या अश्विनौ मरुतो मनुः।
वायुर्वह्निः प्रजाः प्राण ऋतुकर्ता प्रभाकरः॥ ९ ॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः॥ १०॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान्।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्डकोंऽशुमान् ॥ ११॥

हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः॥ १२॥

व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः।
घनवृष्टिरपां मित्रो विन्ध्यवीथीप्लवङ्गमः॥ १३॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः॥ १४॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः।
तेजसामपि तेजस्वी द्वादशात्मन् नमोऽस्तु ते॥ १५॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः।
ज्योतिर्गणानां पतये दिनाधिपतये नमः॥ १६॥

जयाय जयभद्राय हर्यश्वाय नमो नमः।
नमो नमः सहस्रांशो आदित्याय नमो नमः॥ १७॥

नम उग्राय वीराय सारङ्गाय नमो नमः।
नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते॥ १८॥

ब्रह्मेशानाच्युतेशाय सूरायादित्यवर्चसे।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥ १९॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः॥ २०॥

तप्तचामीकराभाय हरये विश्वकर्मणे।
नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे॥ २१॥

नाशयत्येष वै भूतं तमेव सृजति प्रभुः।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः॥ २२॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम्॥ २३॥

देवाश्च क्रतवश्चैव क्रतूनां फलमेव च।
यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः॥ २४॥

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव॥ २५॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम्।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि॥ २६॥

अस्मिन् क्षणे महाबाहो रावणं त्वं जहिष्यसि।
एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम्॥ २७॥

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत् तदा।
धारयामास सुप्रीतो राघवः प्रयतात्मवान्॥ २८॥

आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान्।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान्॥ २९॥

रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपागमत्।
सर्वयत्नेन महता वृतस्तस्य वधेऽभवत्॥ ३०॥
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति॥ ३१॥

॥ श्रीवाल्मीकीये रामायणे युद्धकाण्डे, अगस्त्यप्रोक्तमादित्यहृदयस्तोत्रं सम्पूर्णम्॥

## चाक्षुषोपनिषद् ( चाक्षुषी विद्या* )

विनियोग—ॐ अस्याश्चाक्षुषीविद्याया अहिर्बुध्न्य ऋषिर्गायत्री छन्दः सूर्यो देवता चक्षूरोगनिवृत्तये विनियोगः।

ॐ चक्षुः चक्षुः चक्षुः तेजः स्थिरो भव। मां पाहि पाहि। त्वरितं चक्षूरोगान् शमय शमय। मम जातरूपं तेजो दर्शय दर्शय। यथा अहम् अन्धो न स्यां तथा कल्पय कल्पय। कल्याणं कुरु कुरु। यानि मम पूर्वजन्मोपार्जितानि चक्षुःप्रतिरोधकदुष्कृतानि सर्वाणि निर्मूलय निर्मूलय।

ॐ नमः चक्षुस्तेजोदात्रे दिव्याय भास्कराय। ॐ नमः करुणाकरायामृताय। ॐ नमः सूर्याय। ॐ नमो भगवते सूर्यायाक्षितेजसे नमः। खेचराय नमः। महते नमः। रजसे नमः। तमसे नमः। असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मा अमृतं गमय। उष्णो भगवाञ्छुचिरूपः। हंसो भगवान् शुचिरप्रतिरूपः।

य इमां चाक्षुष्मतीविद्यां ब्राह्मणो नित्यमधीते न तस्याक्षिरोगो भवति। न तस्य कुले अन्धो भवति। अष्टौ ब्राह्मणान् सम्यग् ग्राहयित्वा विद्यासिद्धिर्भवति। ॐ नमो भगवते आदित्याय अहोवाहिनी अहोवाहिनी अहोवाहिनी स्वाहा।

॥ श्रीकृष्णयजुर्वेदीया चाक्षुषी विद्या सम्पूर्णा॥

---

* इस चाक्षुषी विद्याके श्रद्धा-विश्वासपूर्वक पाठ करनेसे नेत्रके समस्त रोग दूर हो जाते हैं। आँखकी ज्योति स्थिर रहती है। इसका पाठ नित्य करनेवालेके कुलमें कोई अन्धा नहीं होता। पाठके अन्तमें गन्धादियुक्त जलसे सूर्यको अर्घ्य देकर नमस्कार करना चाहिये।

## श्रीशिवपञ्चाक्षरस्तोत्रम्

नागेन्द्रहाराय त्रिलोचनाय

भस्माङ्गरागाय महेश्वराय।

नित्याय शुद्धाय दिगम्बराय

तस्मै 'न' काराय नमः शिवाय॥ १॥

मन्दाकिनीसलिलचन्दनचर्चिताय

नन्दीश्वरप्रमथनाथमहेश्वराय।

मन्दारपुष्पबहुपुष्पसुपूजिताय

तस्मै 'म' काराय नमः शिवाय॥ २॥

शिवाय गौरीवदनाब्जवृन्द-

सूर्याय दक्षाध्वरनाशकाय।

श्रीनीलकण्ठाय वृषध्वजाय

तस्मै 'शि' काराय नमः शिवाय॥ ३॥

वसिष्ठकुम्भोद्भवगौतमार्य-

मुनीन्द्रदेवार्चितशेखराय।

चन्द्रार्कवैश्वानरलोचनाय

तस्मै 'व' काराय नमः शिवाय॥ ४॥

यक्षस्वरूपाय जटाधराय

पिनाकहस्ताय सनातनाय।

दिव्याय देवाय दिगम्बराय

तस्मै 'य' काराय नमः शिवाय॥ ५॥

पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ।

शिवलोकमवाप्नोति शिवेन सह मोदते॥ ६॥

॥ इति श्रीमच्छङ्कराचार्यविरचितं शिवपञ्चाक्षरस्तोत्रं सम्पूर्णम्॥

# श्रीशिवमहिम्नःस्तोत्रम्

*पुष्पदन्त उवाच*

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर निरपवादः परिकरः॥ १॥

अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः॥ २॥

मधुस्फीता वाचः परमममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम्।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता॥ ३॥

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्
त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु।
अभव्यानामस्मिन् वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः॥ ४॥

किमीहः किं कायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः॥ ५॥

अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति।
अनीशो वा कुर्याद् भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे॥ ६॥

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥ ७ ॥
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम्।
सुरास्तां तामृद्धिं दधति च भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति॥ ८ ॥
ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये।
समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता॥ ९ ॥
तवैश्वर्यं यत्नाद् यदुपरि विरिञ्चो हरिरधः
परिच्छेतुं यातावनलमनलस्कन्धवपुषः।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति॥ १० ॥
अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद् बाहूनभृत रणकण्डूपरवशान्।
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम्॥ ११ ॥
अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः॥ १२ ॥
यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः।
न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयो-
र्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः॥ १३ ॥
अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्याऽऽसीद्यस्त्रिनयनविषं संहृतवतः।

स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ १४ ॥
असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्
स्मरः स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ॥ १५ ॥
मही पादाघाताद् व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौःस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥
वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद् द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥
रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥
हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥
क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ २० ॥
क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।

क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः॥ २१॥
प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः॥ २२॥
स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरत देहार्धघटना-
दवैति त्वामद्धा बत वरद मुग्धा युवतयः॥ २३॥
श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि॥ २४॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान्॥ २५॥
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि॥ २६॥
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्॥ २७॥
भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।

अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रविहितनमस्योऽस्मि भवते॥ २८॥
नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः॥ २९॥
बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत्संहारे हराय नमो नमः।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः॥ ३०॥
कृशपरिणति चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः।
इति चकितममन्दीकृत्य मां भक्तिराधाद्
वरद चरणयोस्ते वाक्यपुष्पोपहारम्॥ ३१॥
असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति॥ ३२॥
असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौले-
र्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य।
सकलगुणवरिष्ठः पुष्पदन्ताभिधानो
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार॥ ३३॥
अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्
पठति परमभक्त्या शुद्धचित्तः पुमान् यः।
स भवति शिवलोके रुद्रतुल्यस्तथात्र
प्रचुरतरधनायुः पुत्रवान् कीर्तिमांश्च॥ ३४॥
महेशान्नापरो देवो महिम्नो नापरा स्तुतिः।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम्॥ ३५॥

दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः।
महिम्नः स्तवपाठस्य कलां नार्हन्ति षोडशीम्॥ ३६॥
कुसुमदशननामा सर्वगन्धर्वराजः
शिशुशशिधरमौलेर्देवदेवस्य दासः।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्
स्तवनमिदमकार्षीद् दिव्यदिव्यं महिम्नः॥ ३७॥
सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम्॥ ३८॥
आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम्।
अनौपम्यं मनोहारि शिवमीश्वरवर्णनम्॥ ३९॥
इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः॥ ४०॥
तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर।
यादृशोऽसि महादेव तादृशाय नमो नमः॥ ४१॥
एककालं द्विकालं वा त्रिकालं यः पठेन्नरः।
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥ ४२॥
श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः॥ ४३॥

॥ श्रीशिवमहिम्नःस्तोत्रं सम्पूर्णम्॥

# श्रीशिवमानस-पूजा

रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम्।
जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा
दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्॥ १॥

सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं
भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम्।
शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं
ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु॥ २॥

छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं
वीणाभेरिमृदङ्गकाहलकला गीतं च नृत्यं तथा।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया
सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो॥ ३॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्॥ ४॥

करचरणकृतं वाक्कायजं कर्मजं वा
श्रवणनयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणाब्धे श्रीमहादेव शम्भो॥ ५॥

॥ इति श्रीमच्छङ्कराचार्यविरचिता शिवमानसपूजा समाप्ता॥

## देव्यपराधक्षमापनस्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम्॥ १॥

विधेरज्ञानेन द्रविणविरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत्।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥ २॥

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥ ३॥

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति॥ ४॥

परित्यक्ता देवा विविधविधिसेवाकुलतया
मया पञ्चाशीतेरधिकमपनीते तु वयसि।
इदानीं चेन्मातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि कं यामि शरणम्॥ ५॥

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिरं कोटिकनकैः।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ॥ ६॥

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम्॥ ७ ॥

न मोक्षस्याकाङ्क्षा भवविभववाञ्छापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः॥ ८ ॥

नाराधितासि विधिना विविधोपचारैः
किं रुक्षचिन्तनपरैर्न कृतं वचोभिः।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपामुचितमम्ब परं तवैव॥ ९ ॥

आपत्सु मग्नः स्मरणं त्वदीयं
करोमि दुर्गे करुणार्णवेशि।
नैतच्छठत्वं मम भावयेथाः
क्षुधातृषार्ता जननीं स्मरन्ति॥ १०॥

जगदम्ब विचित्रमत्र किं
परिपूर्णा करुणास्ति चेन्मयि।
अपराधपरम्परापरं
न हि माता समुपेक्षते सुतम्॥ ११॥

मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि।
एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु॥ १२॥

॥ इति श्रीशङ्कराचार्यविरचितं देव्यपराधक्षमापनस्तोत्रं सम्पूर्णम्॥

## अन्नपूर्णास्तोत्रम्

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी॥ १॥

नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी
मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी।
काश्मीरागरुवासिताङ्गरुचिरे काशीपुराधीश्वरी॥ भिक्षां देहि०॥ २॥

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी
चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी।
सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ३॥

कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी।
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ४॥

दृश्यादृश्यविभूतिवाहनकरी ब्रह्माण्डभाण्डोदरी
लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी।
श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ५॥

उर्वीसर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी
वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी।
सर्वानन्दकरी सदा शुभकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ६॥

आदिक्षान्तसमस्तवर्णनकरी शम्भोस्त्रिभावाकरी
काश्मीरात्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा शर्वरी।
कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ७॥

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामं स्वादु पयोधरप्रियकरी सौभाग्यमाहेश्वरी।
भक्ताभीष्टकरी सदाशुभकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ८ ॥

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलधरी चन्द्रार्कवर्णेश्वरी।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ ९ ॥

क्षत्रत्राणकरी महाऽभवकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी॥ भिक्षां देहि०॥ १०॥

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति॥ ११॥

माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्॥ १२॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्री ।विन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ अन्नपूर्णास्तोत्रं संम्पूर्णम्॥

कां सा
पद्मेसि
चन्द्रां
तां

# श्रीकनकधारास्तोत्रम्*

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम्।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः॥ १ ॥
मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि।
माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसम्भवायाः॥ २ ॥
विश्वामरेन्द्रपदविभ्रमदानदक्षमानन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः॥ ३ ॥
आमीलिताक्षमधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेषमनङ्गतन्त्रम्।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः॥ ४ ॥
बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः॥ ५ ॥
कालाम्बुदालिललितोरसि कैटभारेर्धाराधरे स्फुरति या तडिदङ्गनेव।
मातुः समस्तजगतां महनीयमूर्तिर्भद्राणि मे दिशतु भार्गवनन्दनायाः॥ ६ ॥
प्राप्तं पदं प्रथमतः किल यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थरमीक्षणार्धं मन्दालसं च मकरालयकन्यकायाः॥ ७ ॥
दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः॥ ८ ॥
इष्टा विशिष्टमतयोऽपि यया दयार्द्रदृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः॥ ९ ॥
गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति।
सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै॥ १०॥
श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै॥ ११॥

---

* इसके श्रद्धा-विश्वासपूर्वक पाठ-अनुष्ठानसे ऋणमुक्ति और लक्ष्मी-प्राप्ति होती है। कहा जाता है कि आचार्य श्रीशंकरने इसका पाठ करके स्वर्णवर्षा करायी थी।

नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूत्यै।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै॥ १२॥
सम्पत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि।
त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये॥ १३॥
यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसम्पदः।
संतनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे॥ १४॥
सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ १५॥
दिग्घस्तिभिः कनककुम्भमुखावसृष्टस्वर्वाहिनीविमलचारुजलप्लुताङ्गीम्।
प्रातर्नमामि जगतां जननीमशेषलोकाधिनाथगृहिणीममृताब्धिपुत्रीम्॥ १६॥
कमले कमलाक्षवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः।
अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः॥ १७॥
स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्।
गुणाधिका गुरुतरभाग्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः॥ १८॥

॥ श्रीभगवत्पादशङ्करविरचितं कनकधारास्तोत्रं सम्पूर्णम्॥

## श्रीसूक्तम्

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह॥ १॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥ २॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्।
श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम्॥ ३॥
कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम्॥ ४॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।
तां पद्मिनीमीं शरणं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे॥ ५॥

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः।
तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः॥ ६ ॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे॥ ७ ॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्॥ ८ ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥ ९ ॥
मनसः काममाकूतिं वाचः सत्यमशीमहि।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥ १०॥
कर्दमेन प्रजा भूता मयि सम्भव कर्दम।
श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥ ११॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।
नि च देवीं मातरं श्रियं वासय मे कुले॥ १२॥
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह॥ १३॥
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह॥ १४॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्॥ १५॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्॥ १६॥
पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि।
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सं नि धत्स्व॥ १७॥
पद्मानने पद्मऊरू पद्माक्षि पद्मसम्भवे।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्॥ १८॥
अश्वदायि गोदायि धनदायि महाधने।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे॥ १९॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरी रथम्।
प्रजानां भवसि माता आयुष्मन्तं करोतु मे॥ २०॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः।
धनमिन्द्रो बृहस्पतिर्वरुणो धनमश्विना॥ २१॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः॥ २२॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्त्या श्रीसूक्तजापिनाम्॥ २३॥
सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ २४॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्।
लक्ष्मीं प्रियसखीं भूमिं नमाम्यच्युतवल्लभाम्॥ २५॥
महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि।
तन्नो लक्ष्मीः प्रचोदयात्॥ २६॥
आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः।
ऋषयः श्रियः पुत्राश्च श्रीर्देवीर्देवता मताः॥ २७॥
ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा॥ २८॥
श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥ २९॥

॥ ऋग्वेदोक्तं श्रीसूक्तं सम्पूर्णम्॥

## पुरुषसूक्तम्

ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।
स भूमिꣳ सर्वत स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥ १ ॥
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २ ॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ३ ॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ ४ ॥
ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ५ ॥
तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥ ६ ॥
तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ७ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ ८ ॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ९ ॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते॥ १०॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत॥ ११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ १२॥
नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्॥ १३॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥ १४॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥ १५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

॥ पुरुषसूक्तं सम्पूर्णम्॥

## श्रीकृष्णाष्टकम्

श्रियाश्लिष्टो विष्णुः स्थिरचरवपुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः॥ १॥
यतः सर्वं जातं वियदनिलमुख्यं जगदिदं
स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा।
लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः। शरण्यो०॥ २॥
असूनायम्यादौ यमनियममुख्यैः सुकरणै-
र्निरुध्येदं चित्तं हृदि विलयमानीय सकलम्।
यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ। शरण्यो०॥ ३॥
पृथिव्यां तिष्ठन् यो यमयति महीं वेद न धरा
यमित्यादौ वेदो वदति जगतामीशममलम्।
नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ। शरण्यो०॥ ४॥
महेन्द्रादिर्देवो जयति दितिजान् यस्य बलतो
न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते।
कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः। शरण्यो०॥ ५॥
विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां
विना यस्य ज्ञानं जनिमृतिभयं याति जनता।
विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः। शरण्यो०॥ ६॥

नरातङ्कोत्तङ्कः शरणशरणो भ्रान्तिहरणो
घनश्यामः वामो व्रजशिशुवयस्योऽर्जुनसखः।
स्वयम्भूर्भूतानां जनक उचिताचारसुखदः। शरण्यो० ॥ ७ ॥
यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः। शरण्यो० ॥ ८ ॥
इति हरिरखिलात्माराधितः शंकरेण
श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः।
यतिवरनिकटे श्रीयुक्त आविर्बभूव
स्वगुणवृत उदारः शङ्खचक्राब्जहस्तः ॥ ९ ॥

॥ श्रीमच्छङ्कराचार्यकृतं कृष्णाष्टकं सम्पूर्णम् ॥

## श्रीगङ्गाष्टकम्

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथि प्रार्थये।
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥
त्वत्तीरे तरुकोटरान्तर्गतो गङ्गे विहङ्गो वरं
त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः ।
नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारण-
त्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥
उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वा-
वारीणः स्यां जननमरणक्लेशदुःखासहिष्णुः।
न त्वन्यत्र प्रविरलरणत्कङ्कणक्वाणमिश्रं
वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥
काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं
स्त्रोतोभिश्चलितं तटाम्बुलुलितं वीचीभिरान्दोलितम्।

दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा
द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः॥ ४॥
अभिनवबिसवल्ली पादपद्मस्य विष्णो-
मर्दनमथनमौलेर्मालतीपुष्पमाला ।
जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः
क्षपितकलिकलङ्का जाह्नवी नः पुनातु॥ ५॥
एतत्तालतमालसालसरलव्यालोलवल्लीलता-
च्छन्नं सूर्यकरप्रतापरहितं शङ्खेन्दुकुन्दोज्ज्वलम्।
गन्धर्वामरसिद्धकिन्नरवधूत्तुङ्गस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम्॥ ६॥
गाङ्गं वारि मनोहारि मुरारिचरणच्युतम्।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम्॥ ७॥
पापापहारि दुरितारि तरङ्गधारि
शैलप्रचारि गिरिराजगुहाविदारि।
झङ्कारकारि हरिपादरजोऽपहारि
गाङ्गं पुनातु सततं शुभकारि वारि॥ ८॥
गङ्गाष्टकं पठति यः प्रयतः प्रभाते
वाल्मीकिना विरचितं शुभदं मनुष्यः।
प्रक्षाल्य गात्रकलिकल्मषपङ्कमाशु
मोक्षं लभेत्पतति नैव नरो भवाब्धौ॥ ९॥

॥ श्रीमहर्षिवाल्मीकिविरचितं गङ्गाष्टकं सम्पूर्णम्॥

## श्रीनवग्रहस्तोत्रम्

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम्।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्॥ १ ॥
दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम्।
नमामि शशिनं सोमं शम्भोर्मुकुटभूषणम्॥ २ ॥
धरणीगर्भसम्भूतं विद्युत्कान्तिसमप्रभम्।
कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम्॥ ३ ॥
प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम्।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम्॥ ४ ॥
देवानां च ऋषीणां च गुरुं काञ्चनसंनिभम्।
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम्॥ ५ ॥
हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम्।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम्॥ ६ ॥
नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम्।
छायामार्तण्डसम्भूतं तं नमामि शनैश्चरम्॥ ७ ॥
अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम्।
सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम्॥ ८ ॥
पलाशपुष्पसंकाशं तारकाग्रहमस्तकम्।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम्॥ ९ ॥
इति व्यासमुखोद्गीतं यः पठेत् सुसमाहितः।
दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति॥ १० ॥
नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम्।
ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम्॥ ११ ॥

॥ महर्षिव्यासविरचितं नवग्रहस्तोत्रं सम्पूर्णम्॥

# श्रीकालभैरवाष्टकम्

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम्।
नारदादियोगिवृन्दवन्दितं दिगम्बरं काशिकापुराधिनाथकालभैरवं भजे॥ १॥
भानुकोटिभास्वरं भवाब्धितारकं परं नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम्।
कालकालमम्बुजाक्षमक्षशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे॥ २॥
शूलटङ्कपाशदण्डपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम्।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं काशिकापुराधिनाथकालभैरवं भजे॥ ३॥
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम्।
विनिक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं काशिकापुराधिनाथकालभैरवं भजे॥ ४॥
धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम्।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं काशिकापुराधिनाथकालभैरवं भजे॥ ५॥
रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरञ्जनम्।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिकापुराधिनाथकालभैरवं भजे॥ ६॥
अट्टहासभिन्नपद्मजाण्डकोशसन्ततिं दृष्टिपातनष्टपापजालमुग्रशासनम्।
अष्टसिद्धिदायकं कपालमालिकन्धरं काशिकापुराधिनाथकालभैरवं भजे॥ ७॥
भूतसङ्घनायकं विशालकीर्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम्।
नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिकापुराधिनाथकालभैरवं भजे॥ ८॥
कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम्।
शोकमोहदैन्यलोभकोपतापनाशनं ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं ध्रुवम्॥ ९॥

॥ श्रीमच्छङ्कराचार्यविरचितं कालभैरवाष्टकं सम्पूर्णम्॥

# रामरक्षास्तोत्रम्

'रामरक्षाकवच' की सिद्धिकी विधि

नवरात्रमें प्रतिदिन नौ दिनोंतक ब्राह्म-मुहूर्तमें नित्यकर्म तथा स्नानादिसे निवृत्त हो शुद्ध वस्त्र धारणकर कुशाके आसनपर सुखासन लगाकर बैठ जाइये। भगवान् श्रीरामके कल्याणकारी स्वरूपमें चित्तको एकाग्र करके इस महान् फलदायी स्तोत्रका कम-से-कम ग्यारह बार और यदि यह न हो सके तो सात बार नियमित रूपसे प्रतिदिन पाठ कीजिये। पाठ करनेवालेकी श्रीरामकी शक्तियोंके प्रति जितनी अखण्ड श्रद्धा होगी, उतना ही फल प्राप्त होगा। वैसे 'रामरक्षाकवच' कुछ लंबा है, पर इस संक्षिप्तरूपसे भी काम चल सकता है। पूर्ण शान्ति और विश्वाससे इसका जाप होना चाहिये, यहाँतक कि यह कण्ठस्थ हो जाय।

विनियोगः

**अस्य श्रीरामरक्षास्तोत्रमन्त्रस्य बुधकौशिक ऋषिः श्रीसीता-रामचन्द्रो देवता अनुष्टुप् छन्दः सीता शक्तिः श्रीमान् हनुमान् कीलकं श्रीरामचन्द्रप्रीत्यर्थे रामरक्षास्तोत्रजपे विनियोगः।**

ध्यानम्

**ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं**
**पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम्।**
**वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं**
**नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम्॥**

## स्तोत्रम्

**चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।**
**एकैकमक्षरं पुंसां महापातकनाशनम्॥ १॥**
**ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम्।**
**जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम्॥ २॥**
**सासितूणधनुर्बाणपाणिं नक्तंचरान्तकम्।**
**स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम्॥ ३॥**
**रामरक्षां पठेत् प्राज्ञः पापघ्नीं सर्वकामदाम्।**
**शिरो मे राघवः पातु भालं दशरथात्मजः॥ ४॥**

कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः॥ ५ ॥
जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः।
स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः॥ ६ ॥
करौ सीतापतिः पातु हृदयं जामदग्न्यजित्।
मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः॥ ७ ॥
सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत्॥ ८ ॥
जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः॥ ९ ॥
एतां रामबलोपेतां रक्षां यः सुकृती पठेत्।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत्॥ १०॥
पातालभूतलव्योमचारिणश्छद्मचारिणः।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः॥ ११॥
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन्।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति॥ १२॥
जगज्जैत्रैकमन्त्रेण रामनाम्नाभिरक्षितम्।
यः कण्ठे धारयेत्तस्य करस्थाः सर्वसिद्धयः॥ १३॥
वज्रपञ्जरनामेदं यो रामकवचं स्मरेत्।
अव्याहताज्ञः सर्वत्र लभते जयमङ्गलम्॥ १४॥
आदिष्टवान् यथा स्वप्ने रामरक्षामिमां हरः।
तथा लिखितवान् प्रातः प्रबुद्धो बुधकौशिकः॥ १५॥
आरामः कल्पवृक्षाणां विरामः सकलापदाम्।
अभिरामस्त्रिलोकानां रामः श्रीमान् स नः प्रभुः॥ १६॥
तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ॥ १७॥
फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ॥ १८॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम्।
रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ॥ १९॥
आत्तसज्जधनुषाविषुस्पृशा-
वक्षयाशुगनिषङ्गसङ्गिनौ।
रक्षणाय मम रामलक्ष्मणा-
वग्रतः पथि सदैव गच्छताम्॥ २०॥
संनद्धः कवची खड्गी चापबाणधरो युवा।
गच्छन् मनोरथान् नश्च रामः पातु सलक्ष्मणः॥ २१॥
रामो दाशरथिः शूरो लक्ष्मणानुचरो बली।
काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः॥ २२॥
वेदान्तवेद्यो यज्ञेशः पुराणपुरुषोत्तमः।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः॥ २३॥
इत्येतानि जपन् नित्यं मद्भक्तः श्रद्धयान्वितः।
अश्वमेधाधिकं पुण्यं सम्प्राप्नोति न संशयः॥ २४॥
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम्।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो नराः॥ २५॥
रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम्।
राजेन्द्रं सत्यसंधं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्॥ २६॥
रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः॥ २७॥
श्रीराम राम रघुनन्दन राम राम
श्रीराम राम भरताग्रज राम राम।
श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव राम राम॥ २८॥
श्रीरामचन्द्रचरणौ मनसा स्मरामि
श्रीरामचन्द्रचरणौ वचसा गृणामि।

श्रीरामचन्द्रचरणौ शिरसा नमामि
श्रीरामचन्द्रचरणौ शरणं प्रपद्ये॥ २९॥

माता रामो मत्पिता रामचन्द्रः
स्वामी रामो मत्सखा रामचन्द्रः।
सर्वस्वं मे रामचन्द्रो दयालु-
र्नान्यं जाने नैव जाने न जाने॥ ३०॥

दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम्॥ ३१॥

लोकाभिरामं रणरङ्गधीरं
राजीवनेत्रं रघुवंशनाथम्।
कारुण्यरूपं करुणाकरं तं
श्रीरामचन्द्रं शरणं प्रपद्ये॥ ३२॥

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शरणं प्रपद्ये॥ ३३॥

कूजन्तं रामरामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥ ३४॥

आपदामपहर्तारं दातारं सर्वसम्पदाम्।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्॥ ३५॥

भर्जनं भवबीजानामर्जनं सुखसम्पदाम्।
तर्जनं यमदूतानां रामरामेति गर्जनम्॥ ३६॥

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर॥ ३७॥

राम रामेति रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने॥ ३८॥

॥ इति श्रीबुधकौशिकमुनिविरचितं श्रीरामरक्षास्तोत्रं सम्पूर्णम्॥

## श्रीमद्भागवतान्तर्गत

गजेन्द्रकृत भगवान्‌का स्तवन

# गजेन्द्रमोक्ष

श्रीशुक उवाच

एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम्॥ १॥

गजेन्द्र उवाच

ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम्।
पुरुषायादिबीजाय परेशायाभिधीमहि॥ २॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम्॥ ३॥
यः स्वात्मनीदं निजमाययार्पितं
क्वचिद् विभातं क्व च तत् तिरोहितम्।
अविद्धदृक् साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः॥ ४॥
कालेन पञ्चत्वमितेषु कृत्स्नशो
लोकेषु पालेषु च सर्वहेतुषु।
तमस्तदाऽऽसीद् गहनं गभीरं
यस्तस्य पारेऽभिविराजते विभुः॥ ५॥
न यस्य देवा ऋषयः पदं विदु-
र्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्।
यथा नटस्याकृतिभिर्विचेष्टतो
दुरत्ययानुक्रमणः स मावतु॥ ६॥
दिदृक्षवो यस्य पदं सुमङ्गलं
विमुक्तसङ्गा मुनयः सुसाधवः।
चरन्त्यलोकव्रतमव्रणं वने
भूतात्मभूताः सुहृदः स मे गतिः॥ ७॥

न विद्यते यस्य च जन्म कर्म वा
न नामरूपे गुणदोष एव वा।
तथापि लोकाप्ययसम्भवाय यः
स्वमायया तान्यनुकालमृच्छति॥ ८ ॥

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे॥ ९ ॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने।
नमो गिरां विदूराय मनसश्चेतसामपि॥ १०॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे॥ ११॥

नमः शान्ताय घोराय मूढाय गुणधर्मिणे।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च॥ १२॥

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे।
पुरुषायात्ममूलाय मूलप्रकृतये नमः॥ १३॥

सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे।
असताच्छाययोक्ताय सदाभासाय ते नमः॥ १४॥

नमो नमस्तेऽखिलकारणाय
निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नायमहार्णवाय
नमोऽपवर्गाय परायणाय॥ १५॥

गुणारणिच्छन्नचिदूष्मपाय
तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागम-
स्वयंप्रकाशाय नमस्करोमि॥ १६॥

मादृक्प्रपन्नपशुपाशविमोक्षणाय
मुक्ताय भूरिकरुणाय नमोऽलयाय।
स्वांशेन सर्वतनुभृन्मनसि प्रतीत-
प्रत्यग्दृशे भगवते बृहते नमस्ते॥ १७॥

आत्मात्मजाप्तगृहवित्तजनेषु सक्तै-
दुर्ष्प्रापणाय गुणसङ्गविवर्जिताय।
मुक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय॥ १८॥

यं धर्मकामार्थविमुक्तिकामा
भजन्त इष्टां गतिमाप्नुवन्ति।
किं त्वाशिषो रात्यपि देहमव्ययं
करोतु मेऽदभ्रदयो विमोक्षणम्॥ १९॥

एकान्तिनो यस्य न कञ्चनार्थं
वाञ्छन्ति ये वै भगवत्प्रपन्नाः।
अत्यद्भुतं तच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः॥ २०॥

तमक्षरं ब्रह्म परं परेश-
मव्यक्तमाध्यात्मिकयोगगम्यम्।
अतीन्द्रियं सूक्ष्ममिवातिदूर-
मनन्तमाद्यं परिपूर्णमीडे॥ २१॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः॥ २२॥

यथार्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यान्ति संयान्त्यसकृत् स्वरोचिषः।
तथा यतोऽयं गुणसम्प्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः॥ २३॥

स वै न देवासुरमर्त्यतिर्यङ्
न स्त्री न षण्ढो न पुमान् न जन्तुः।
नायं गुणः कर्म न सन्न चासन्
निषेधशेषो जयतादशेषः॥ २४॥

जिजीविषे नाहमिहामुया कि-
मन्तर्बहिश्चावृतयेभयोन्या।

इच्छामि कालेन न यस्य विप्लव-
स्तस्यात्मलोकावरणस्य मोक्षम्॥ २५॥
सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम्।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम्॥ २६॥
योगरन्धितकर्माणो हृदि योगविभाविते।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम्॥ २७॥
नमो नमस्तुभ्यमसह्यवेग-
शक्तित्रयायाखिलधीगुणाय।
प्रपन्नपालाय दुरन्तशक्तये
कदिन्द्रियाणामनवाप्यवर्त्मने॥ २८॥
नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम्।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम्॥ २९॥

श्रीशुक उवाच

एवं गजेन्द्रमुपवर्णितनिर्विशेषं
ब्रह्मादयो विविधलिङ्गभिदाभिमानाः।
नैते यदोपससृपुर्निखिलात्मकत्वात्
तत्राखिलामरमयो हरिराविरासीत्॥ ३०॥
तं तद्वदार्त्तमुपलभ्य जगन्निवासः
स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः।
छन्दोमयेन गरुडेन समुह्यमान-
श्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः॥ ३१॥
सोऽन्तःसरस्युरुबलेन गृहीत आर्त्तो
दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रा-
न्नारायणाखिलगुरो भगवन् नमस्ते॥ ३२॥
तं वीक्ष्य पीडितमजः सहसावतीर्य
सग्राहमाशु सरसः कृपयोज्जहार।
ग्राहाद् विपाटितमुखादरिणा गजेन्द्रं
सम्पश्यतां हरिरमूमुचदुस्त्रियाणाम्॥ ३३॥

श्रीपरमात्मने नमः

# विष्णुसहस्रनामस्तोत्रम्

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे॥
नमः समस्तभूतानामादिभूताय भूभृते।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे॥

वैशम्पायन उवाच

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत॥ १ ॥

युधिष्ठिर उवाच

किमेकं दैवतं लोके किं वाप्येकं परायणम्।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम्॥ २ ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात्॥ ३ ॥

भीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्।
स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः॥ ४ ॥
तमेव चार्चयन् नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च॥ ५ ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्।
लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत्॥ ६ ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम्॥ ७ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा॥ ८ ॥

परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद्ब्रह्म परमं यः परायणम्॥ ९ ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्।
दैवतं देवतानां च भूतानां योऽव्ययः पिता॥ १०॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये॥ ११॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम्॥ १२॥
यानि नामानि गौणानि विख्यातानि महात्मनः।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये॥ १३॥
ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद् भूतभृद् भावो भूतात्मा भूतभावनः॥ १४॥
पूतात्मा परमात्मा च मुक्तानां परमा गतिः।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च॥ १५॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः॥ १६॥
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः॥ १७॥
स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः।
अनादिनिधनो धाता विधाता धातुरुत्तमः॥ १८॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः॥ १९॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम्॥ २०॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः॥ २१॥
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्॥ २२॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः॥ २३॥
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः॥ २४॥
वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः॥ २५॥
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः॥ २६॥
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः॥ २७॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः॥ २८॥
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः॥ २९॥
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः॥ ३०॥
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः।
अतीन्द्रियो महामायो महोत्साहो महाबलः॥ ३१॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्॥ ३२॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः॥ ३३॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः॥ ३४॥
अमृत्युः सर्वदृक् सिंहः संधाता सन्धिमान् स्थिरः।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा॥ ३५॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्त्रग्वी वाचस्पतिरुदारधीः ॥ ३६ ॥
अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्त्रमूर्धा विश्वात्मा सहस्त्राक्षः सहस्त्रपात् ॥ ३७ ॥
आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ३८ ॥
सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभुग् विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ ३९ ॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥ ४० ॥
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१ ॥
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२ ॥
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४३ ॥
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४४ ॥
भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ४५ ॥
युगादिकृद् युगावर्तो नैकमायो महाशनः ।
अदृश्योऽव्यक्तरूपश्च सहस्त्रजिदनन्तजित् ॥ ४६ ॥
इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७ ॥
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८ ॥
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ४९ ॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः॥ ५०॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः॥ ५१॥
अतुलः शरभो भीमः समयज्ञो हविर्हरिः।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः॥ ५२॥
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः।
महीधरो महाभागो वेगवानमिताशनः॥ ५३॥
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः।
करणं कारणं कर्ता विकर्ता गहनो गुहः॥ ५४॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः॥ ५५॥
रामो विरामो विरजो मार्गो नेयो नयोऽनयः।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः॥ ५६॥
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः॥ ५७॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः॥ ५८॥
विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम्।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः॥ ५९॥
अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः॥ ६०॥
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम्॥ ६१॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः॥ ६२॥
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः॥ ६३॥

धर्मगुब् धर्मकृद् धर्मी सदसत्क्षरमक्षरम्।
अविज्ञाता सहस्त्रांशुर्विधाता कृतलक्षणः॥ ६४॥
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः॥ ६५॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।
शरीरभूतभृद् भोक्ता कपीन्द्रो भूरिदक्षिणः॥ ६६॥
सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः।
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः॥ ६७॥
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः॥ ६८॥
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः॥ ६९॥
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत्॥ ७०॥
महावराहो गोविन्दः सुषेणः कनकाङ्गदी।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः॥ ७१॥
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः॥ ७२॥
भगवान् भगहानन्दी वनमाली हलायुधः।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः॥ ७३॥
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः।
दिविस्पृक् सर्वदृग् व्यासो वाचस्पतिरयोनिजः॥ ७४॥
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्॥ ७५॥
शुभाङ्गः शान्तिदः स्त्रष्टा कुमुदः कुवलेशयः।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः॥ ७६॥
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः॥ ७७॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः॥ ७८॥
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः॥ ७९॥
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः॥ ८०॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः॥ ८१॥
कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः॥ ८२॥
कामदेवः कामपालः कामी कान्तः कृतागमः।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः॥ ८३॥
ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः॥ ८४॥
महाक्रमो महाकर्मा महातेजा महोरगः।
महाक्रतुर्महायज्वा महायज्ञो महाहविः॥ ८५॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः॥ ८६॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः॥ ८७॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः॥ ८८॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः॥ ८९॥
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान्।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः॥ ९०॥
एको नैकः सवः कः किं यत् तत् पदमनुत्तमम्।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः॥ ९१॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।
वीरहा विषमः शून्यो घृताशीरचलश्चलः॥ ९२ ॥
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः॥ ९३ ॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः॥ ९४ ॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्॥ ९५ ॥
समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा॥ ९६ ॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥ ९७ ॥
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी॥ ९८ ॥
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः।
महाह्रदो महागर्तो महाभूतो महानिधिः॥ ९९ ॥
कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः॥ १०० ॥
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः॥ १०१ ॥
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः।
अमूर्तिरनघोऽचिन्त्यो भयकृद् भयनाशनः॥ १०२ ॥
अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः॥ १०३ ॥
भारभृत् कथितो योगी योगीशः सर्वकामदः।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः॥ १०४ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः।
अपराजितः सर्वसहो नियन्ता नियमो यमः॥ १०५॥
सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः॥ १०६॥
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग् विभुः।
रविर्विरोचनः सूर्यः सविता रविलोचनः॥ १०७॥
अनन्तो हुतभुग् भोक्ता सुखदो नैकजोऽग्रजः।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः॥ १०८॥
सनात् सनातनतमः कपिलः कपिरप्ययः।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः॥ १०९॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः॥ ११०॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः॥ १११॥
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः॥ ११२॥
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः।
चतुरस्त्रो गभीरात्मा विदिशो व्यादिशो दिशः॥ ११३॥
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः।
जननो जनजन्मादिर्भीमो भीमपराक्रमः॥ ११४॥
आधारनिलयोऽधाता पुष्पहासः प्रजागरः।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः॥ ११५॥
प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः॥ ११६॥
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः॥ ११७॥
यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः।
यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च॥ ११८॥

आत्मयोनिः स्वयंजातो वैखानः सामगायनः।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः॥ ११९॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः॥ १२०॥

॥ सर्वप्रहरणायुध ॐ नम इति॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम्॥ १२१॥
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्।
नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः॥ १२२॥
वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात्॥ १२३॥
धर्मार्थी प्राप्नुयाद् धर्ममर्थार्थी चार्थमाप्नुयात्।
कामानवाप्नुयात् कामी प्रजार्थी प्राप्नुयात् प्रजाम्॥ १२४॥
भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत्॥ १२५॥
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम्॥ १२६॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः॥ १२७॥
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात्।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः॥ १२८॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्।
स्तुवन् नामसहस्रेण नित्यं भक्तिसमन्वितः॥ १२९॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्॥ १३०॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित्।
जन्ममृत्युजराव्याधिभयं नैवोपजायते॥ १३१॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः॥ १३२॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे॥ १३३॥
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः।
वासुदेवस्य वीर्येण विधृतानि महात्मनः॥ १३४॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद् वशे वर्ततेदं कृष्णस्य सचराचरम्॥ १३५॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥ १३६॥
सर्वागमानामाचारः प्रथमं परिकल्पते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥ १३७॥
ऋषयः पितरो देवा महाभूतानि धातवः।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्॥ १३८॥
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च।
वेदाः शास्त्राणि विज्ञानमेतत् सर्वं जनार्दनात्॥ १३९॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।
त्रीँल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥ १४०॥
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।
पठेद् य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च॥ १४१॥
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम्।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्॥ १४२॥

ॐ तत्सदिति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यामानुशासनिके पर्वणि भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रम्॥

# श्रीसप्तश्लोकी दुर्गा

*शिव उवाच*

देवि त्वं भक्तसुलभे सर्वकार्यविधायिनी।
कलौ हि कार्यसिद्ध्यर्थमुपायं ब्रूहि यत्नतः॥

*देव्युवाच*

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम्।
मया तवैव स्नेहेनाप्यम्बास्तुतिः प्रकाश्यते॥

विनियोग—अस्य श्रीदुर्गासप्तश्लोकीस्तोत्रमन्त्रस्य नारायण ऋषिः, अनुष्टुप् छन्दः, श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः, श्रीदुर्गाप्रीत्यर्थं सप्तश्लोकीदुर्गापाठे विनियोगः।

ॐ ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति॥ १॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता॥ २॥

सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥ ३॥

शरणागतदीनार्तपरित्राणपरायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते॥ ४॥

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते॥ ५॥

रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान् सकलानभीष्टान्।

त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति॥ ६॥
सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम्॥ ७॥
॥ श्रीसप्तश्लोकी दुर्गा सम्पूर्णा॥

## सप्तश्लोकी गीता

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ १॥
स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः॥ २॥
सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥ ३॥
कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात्॥ ४॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ ५॥
सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम्॥ ६॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥ ७॥
॥ सप्तश्लोकी गीता सम्पूर्णा॥

## चतुःश्लोकि भागवतम्

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥ १॥
ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः॥ २॥
यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम्॥ ३॥
एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा॥ ४॥

॥ चतुःश्लोकि भागवतं सम्पूर्णम्॥

## एकश्लोकि रामायणम्

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम्।
बालीनिग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम्॥

॥ एकश्लोकि रामायणं सम्पूर्णम्॥

# अश्वत्थस्तोत्रम्

*श्रीनारद उवाच*

अनायासेन लोकोऽयं सर्वान् कामानवाप्नुयात्।
सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह॥ १ ॥

*ब्रह्मोवाच*

शृणु देव मुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम्।
यत्प्रदक्षिणतो लोकः सर्वान् कामान् समश्नुते॥ २ ॥
अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः।
ब्रह्मा चोत्तरदेशस्थः पूर्वे त्विन्द्रादिदेवताः॥ ३ ॥
स्कन्धोपस्कन्धपत्रेषु गोविप्रमुनयस्तथा।
मूलं वेदाः पयो यज्ञाः संस्थिता मुनिपुङ्गव॥ ४ ॥
पूर्वादिदिक्षु संयाता नदीनदसरोऽब्धयः।
तस्मात् सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद्बुधः॥ ५ ॥
त्वं क्षीर्यफलकश्चैव शीतलश्च वनस्पते।
त्वामाराध्य नरो विन्द्यादैहिकामुष्मिकं फलम्॥ ६ ॥
चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे।
बोधिसत्त्वाय देवाय ह्यश्वत्थाय नमो नमः॥ ७ ॥
अश्वत्थ यस्मात् त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले।
अतः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि॥ ८ ॥
क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते।
सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम्॥ ९ ॥
एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल॥ १० ॥
अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः।
हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु ते॥ ११ ॥

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते॥ १२॥
सततं वरुणो रक्षेत् त्वामाराद्दृष्टिराश्रयेत्।
परितस्त्वां निषेवन्तां तृणानि सुखमस्तु ते॥ १३॥
अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनम्।
शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो॥ १४॥
अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने।
नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने॥ १५॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः॥ १६॥
यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते।
यदाश्रयाच्चिरञ्जीवी तमश्वत्थं नमाम्यहम्॥ १७॥
अश्वत्थ सुमहाभाग सुभग प्रियदर्शन।
इष्टकामांश्च मे देहि शत्रुभ्यस्तु पराभवम्॥ १८॥
आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसम्पदम्।
देहि देव महावृक्ष त्वामहं शरणं गतः॥ १९॥
ऋग्यजुःसाममन्त्रात्मा सर्वरूपी परात्परः।
अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा॥ २०॥
ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः।
आवृत्य लक्षसंख्यं तत् स्तोत्रमेतत् सुखी भवेत्॥ २१॥
ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः।
पापोपहतचित्तोऽपि व्रतमेतत् समाचरेत्॥ २२॥
एकहस्तं द्विहस्तं वा कुर्याद्गोमयलेपनम्।
अर्चेत् पुरुषसूक्तेन प्रणवेन विशेषतः॥ २३॥
मौनी प्रदक्षिणं कुर्यात् प्रागुक्तफलभाग्भवेत्।
विष्णोर्नामसहस्रेण ह्यच्युतस्यापि कीर्तनात्॥ २४॥

पदे पदान्तरं गत्वा करचेष्टाविवर्जितः।
वाचा स्तोत्रं मनो ध्याने चतुरङ्गं प्रदक्षिणम्॥ २५॥
अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः।
धनायुषां समृद्धिस्तु नरकात् तारयेत् पितॄन्॥ २६॥
अश्वत्थमूलमाश्रित्य शाकान्नोदकदानतः।
एकस्मिन् भोजिते विप्रे कोटिब्राह्मणभोजनम्॥ २७॥
अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात्।
अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा॥ २८॥
एवमाश्वासितोऽश्वत्थः सदाश्वासाय कल्पते।
यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात्॥ २९॥
छिन्नो येन वृथाऽश्वत्थश्छेदिताः पितृदेवताः।
अश्वत्थः पूजितो यत्र पूजिताः सर्वदेवताः॥ ३०॥

॥ ब्रह्मनारदसंवादे अश्वत्थस्तोत्रं सम्पूर्णम्॥

## तुलसीस्तोत्रम्

जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे।
यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः॥ १॥
नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे।
नमो मोक्षप्रदे देवि नमः सम्पत्प्रदायिके॥ २॥
तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा।
कीर्तितापि स्मृता वापि पवित्रयति मानवम्॥ ३॥
नमामि शिरसा देवीं तुलसीं विलसत्तनुम्।
यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते सर्वकिल्बिषात्॥ ४॥
तुलस्या रक्षितं सर्वं जगदेतच्चराचरम्।
या विनिहन्ति पापानि दृष्ट्वा वा पापिभिर्नरैः॥ ५॥
नमस्तुलस्यतितरां यस्यै बद्ध्वाञ्जलिं कलौ।
कलयन्ति सुखं सर्वं स्त्रियो वैश्यास्तथाऽपरे॥ ६॥

तुलस्या नापरं किञ्चिद्दैवतं जगतीतले।
यथा पवित्रितो लोको विष्णुसङ्गेन वैष्णवः॥ ७॥
तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ।
आरोपयति सर्वाणि श्रेयांसि वरमस्तके॥ ८॥
तुलस्यां सकला देवा वसन्ति सततं यतः।
अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन्॥ ९॥
नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे।
पाहि मां सर्वपापेभ्यः सर्वसम्पत्प्रदायिके॥ १०॥
इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता।
विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः॥ ११॥
तुलसी श्रीर्महालक्ष्मीर्विद्याविद्या यशस्विनी।
धर्म्या धर्मानना देवी देवीदेवमनःप्रिया॥ १२॥
लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला।
षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः॥ १३॥
लभते सुतरां भक्तिमन्ते विष्णुपदं लभेत्।
तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया॥ १४॥
तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे।
नमस्ते नारदनुते नारायणमनःप्रिये॥ १५॥

॥ श्रीपुण्डरीककृतं तुलसीस्तोत्रं सम्पूर्णम्॥

## गौको नमस्कार करनेके मन्त्र

नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥
यया सर्वमिदं व्याप्तं जगत् स्थावरजङ्गमम्।
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम्॥

(महा० अनु० ८०। १५)

पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ।
तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः॥
सर्वकामदुघे देवि सर्वतीर्थाभिषेचिनि।
पावनि सुरभिश्रेष्ठे देवि तुभ्यं नमो नमः॥

## गोग्रास-नैवेद्य-मन्त्र

सुरभिस्त्वं जगन्मातर्देवि विष्णुपदे स्थिता।
सर्वदेवमयी ग्रासं मया दत्तमिमं ग्रस॥

## प्रदक्षिणा-मन्त्र

गवां दृष्ट्वा नमस्कृत्य कुर्याच्चैव प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा॥
मातरः सर्वभूतानां गावः सर्वसुखप्रदाः।
वृद्धिमाकाङ्क्षता पुंसा नित्यं कार्या प्रदक्षिणा॥



॥ श्रीहनूमते नमः ॥

# श्रीहनुमानचालीसा

दोहा

श्रीगुरु चरन सरोज रज निज मनु मुकुरु सुधारि।
बरनउँ रघुबर बिमल जसु जो दायकु फल चारि॥
बुद्धिहीन तनु जानिके, सुमिरौं पवन-कुमार।
बल बुधि बिद्या देहु मोहिं, हरहु कलेस बिकार॥

चौपाई

जय हनुमान ज्ञान गुन सागर। जय कपीस तिहुँ लोक उजागर॥
राम दूत अतुलित बल धामा। अंजनि-पुत्र पवनसुत नामा॥
महाबीर बिक्रम बजरंगी। कुमति निवार सुमति के संगी॥
कंचन बरन बिराज सुबेसा। कानन कुंडल कुंचित केसा॥
हाथ बज्र औ ध्वजा बिराजै। काँधे मूँज जनेऊ साजै॥
संकर सुवन केसरीनंदन। तेज प्रताप महा जग बंदन॥
बिद्यावान गुनी अति चातुर। राम काज करिबे को आतुर॥
प्रभु चरित्र सुनिबे को रसिया। राम लषन सीता मन बसिया॥
सूक्ष्म रूप धरि सियहिं दिखावा। बिकट रूप धरि लंक जरावा॥
भीम रूप धरि असुर सँहारे। रामचंद्र के काज सँवारे॥
लाय सजीवन लखन जियाये। श्रीरघुबीर हरषि उर लाये॥
रघुपति कीन्ही बहुत बड़ाई। तुम मम प्रिय भरतहि सम भाई॥
सहस बदन तुम्हरो जस गावैं। अस कहि श्रीपति कंठ लगावैं॥
सनकादिक ब्रह्मादि मुनीसा। नारद सारद सहित अहीसा॥

जम कुबेर दिगपाल जहाँ ते । कबि कोबिद कहि सके कहाँ ते ॥
तुम उपकार सुग्रीवहिं कीन्हा । राम मिलाय राज पद दीन्हा ॥
तुम्हरो मन्त्र बिभीषन माना । लंकेस्वर भए सब जग जाना ॥
जुग सहस्त्र जोजन पर भानू । लील्यो ताहि मधुर फल जानू ॥
प्रभु मुद्रिका मेलि मुख माहीं । जलधि लाँघि गये अचरज नाहीं ॥
दुर्गम काज जगत के जेते । सुगम अनुग्रह तुम्हरे तेते ॥
राम दुआरे तुम रखवारे । होत न आज्ञा बिनु पैसारे ॥
सब सुख लहै तुम्हारी सरना । तुम रच्छक काहू को डर ना ॥
आपन तेज सम्हारो आपै । तीनों लोक हाँक तें काँपै ॥
भूत पिसाच निकट नहिं आवै । महाबीर जब नाम सुनावै ॥
नासै रोग हरै सब पीरा । जपत निरंतर हनुमत बीरा ॥
संकट तें हनुमान छुड़ावै । मन क्रम बचन ध्यान जो लावै ॥
सब पर राम तपस्वी राजा । तिन के काज सकल तुम साजा ॥
और मनोरथ जो कोइ लावै । सोइ अमित जीवन फल पावै ॥
चारों जुग परताप तुम्हारा । है परसिद्ध जगत उजियारा ॥
साधु संत के तुम रखवारे । असुर निकंदन राम दुलारे ॥
अष्ट सिद्धि नौ निधि के दाता । अस बर दीन जानकी माता ॥
राम रसायन तुम्हरे पासा । सदा रहो रघुपति के दासा ॥
तुम्हरे भजन राम को पावै । जनम जनम के दुख बिसरावै ॥
अंत काल रघुबर पुर जाई । जहाँ जन्म हरि-भक्त कहाई ॥
और देवता चित्त न धरई । हनुमत सेइ सर्ब सुख करई ॥
संकट कटै मिटै सब पीरा । जो सुमिरै हनुमत बलबीरा ॥
जै जै जै हनुमान गोसाईं । कृपा करहु गुरु देव की नाईं ॥

जो सत बार पाठ कर कोई। छूटहि बंदि महा सुख होई॥
जो यह पढ़ै हनुमान चलीसा। होय सिद्धि साखी गौरीसा॥
तुलसीदास सदा हरि चेरा। कीजै नाथ हृदय महँ डेरा॥

दोहा

पवनतनय संकट हरन, मंगल मूरति रूप।
राम लखन सीता सहित, हृदय बसहु सुर भूप॥

# देव-पूजामें विहित एवं निषिद्ध पत्र-पुष्प

पञ्चदेव-पूजामें गणपति, गौरी, विष्णु, सूर्य और शिवकी पूजा की जाती है। यहाँ इन देवी-देवताओंके लिये विहित और निषिद्ध पत्र-पुष्प आदिका उल्लेख किया जा रहा है—

## गणपतिके लिये विहित पत्र-पुष्प

गणेशजीको तुलसी छोड़कर सभी पत्र-पुष्प प्रिय हैं। अतः सभी अनिषिद्ध पत्र-पुष्प इनपर चढ़ाये जाते हैं[१]। गणपतिको दूर्वा अधिक प्रिय है। अतः इन्हें सफेद या हरी दूर्वा अवश्य चढ़ानी चाहिये[२]। दूर्वाकी फुनगीमें तीन या पाँच पत्ती होनी चाहिये। गणपतिपर तुलसी कभी न चढ़ाये। पद्मपुराण, आचाररत्नमें लिखा है कि **'न तुलस्या गणाधिपम्'** अर्थात् तुलसीसे गणेशजीकी पूजा कभी न की जाय। कार्तिक-माहात्म्यमें भी कहा है कि **'गणेशं तुलसीपत्रैर्दुर्गां नैव तु दूर्वया'** अर्थात् गणेशजीकी तुलसीपत्रसे और दुर्गाकी दूर्वासे पूजा न करे। गणपतिको नैवेद्यमें लड्डू अधिक प्रिय है[३]।

## देवीके लिये विहित पत्र-पुष्प

भगवान् शंकरकी पूजामें जो पत्र-पुष्प विहित हैं, वे सभी भगवती गौरीको भी प्रिय हैं। अपामार्ग उन्हें विशेष प्रिय है। शंकरपर चढ़ानेके लिये जिन फूलोंका निषेध है तथा जिन फूलोंका नाम नहीं लिया गया है,

---

१-तुलसीं वर्जयित्वा सर्वाण्यपि पत्रपुष्पाणि गणपतिप्रियाणि॥
(आचारभूषण)

२-हरिताः श्वेतवर्णा वा पञ्चत्रिपत्रसंयुताः।
दूर्वाङ्कुरा मया दत्ता एकविंशतिसम्मिताः॥
(गणेशपुराण)

३-गणेशो लड्डुकप्रियः। (आचारेन्दु)

वे भी भगवतीपर चढ़ाये जाते हैं[१]। जितने लाल फूल हैं वे सभी भगवतीको अभीष्ट हैं तथा सुगन्धित समस्त श्वेत फूल भी भगवतीको विशेष प्रिय हैं[२]।

बेला, चमेली, केसर, श्वेत और लाल फूल, श्वेत कमल, पलाश, तगर, अशोक, चंपा, मौलसिरी, मदार, कुंद, लोध, कनेर, आक, शीशम और अपराजित (शंखपुष्पी) आदिके फूलोंसे देवीकी भी पूजा की जाती है[३]।

इन फूलोंमें आक और मदार—इन दो फूलोंका निषेध भी मिलता है—**'देवीनामर्कमन्दारौ.....(वर्जयेत्)'** (शातातप)। अतः ये दोनों विहित भी हैं और प्रतिषिद्ध भी हैं। जब अन्य विहित फूल न मिलें तब इन दोनोंका उपयोग करे[४]। दुर्गासे भिन्न देवियोंपर इन दोनोंको न चढ़ाये।

---

१-यानि पुष्पाणि चोक्तानि शङ्करस्यार्चने पुरा।
तानि गौर्याः प्रशस्तानि त्वपामार्गो विशेषतः॥
शिवार्चने निषिद्धानि पत्रपुष्पफलानि च।
तानि देव्याः प्रशस्तानि अनुक्तानि विशेषतः॥

२-नित्यं गौर्याः प्रशस्तानि रक्तपुष्पाणि सर्वदा।
शुक्लान्यपि च सर्वाणि गन्धवन्ति स्मृतानि वै॥
(पारिजात)

३-ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुङ्कुमैः॥
सितरक्तैश्च कुसुमैस्तथा पद्मैश्च पाण्डुरैः॥
किंशुकैस्तगरैश्चैव किंकिरातैः सचम्पकैः।
बकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः।
करवीरार्कपुष्पैश्च शिंशपैश्चापराजितैः॥
(आचारभूषण)

४-अर्कपुष्पविधानं तु विहितालाभे द्रष्टव्यम् देवीनामर्कमन्दाराविति निषेधात्।

किंतु दुर्गाजीपर चढ़ाया जा सकता है, क्योंकि दुर्गाकी पूजामें इन दोनोंका विधान है[१]।

शमी, अशोक, कर्णिकार (कनियार या अमलतास), गूमा, दोपहरिया, अगस्त्य, मदन, सिन्दुवार, शल्लकी, माधवी आदि लताएँ, कुशकी मंजरियाँ, बिल्वपत्र, केवड़ा, कदम्ब, भटकटैया, कमल[२]—ये फूल भगवतीको प्रिय हैं।

## देवीके लिये विहित-प्रतिषिद्ध पत्र-पुष्प

आक और मदारकी तरह दूर्वा, तिलक, मालती, तुलसी, भंगरैया और तमाल विहित-प्रतिषिद्ध हैं अर्थात् ये शास्त्रोंसे विहित भी हैं और निषिद्ध भी हैं[३]। विहित-प्रतिषिद्धके सम्बन्धमें तत्त्वसागरसंहिताका कथन है कि

---

१-अर्कमन्दारनिषेधो दुर्गेतरदेवीविषयः। दुर्गापूजाधिकारे तयोः पाठात्।

(आचारेन्दु, पृ० १५९)

२-मल्लिकामुत्पलं पुष्पं शमीं पुन्नागचम्पकम्।
अशोकं कर्णिकारं च द्रोणपुष्पं विशेषतः॥

(आचारेन्दु, पृ० १५९)

धत्तूरकातिरक्तैश्च बन्धूकागस्तिसम्भवैः।
मदनैः सिन्दुवारैश्च सुरभीभिर्बकैस्तथा।
लताभिर्ब्रह्मवृक्षस्य दूर्वाङ्कुरैः सुकोमलैः॥
मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः।
...... केतकीं चातिमुक्तं च बन्धूकं बहुलान्यपि।
कर्णिकारः कदम्बश्च सिन्दुवारः समृद्धये।
पुन्नागश्चम्पकश्चैव यूथिका वनमल्लिका॥
तगरार्जुनमल्ली च बृहती शतपत्रिका॥

(वीरमि०, पृ० ३१५—३१८)

विशेषः—इन श्लोकोंमें जो फूल आ चुके हैं, उनका हिंदीमें उल्लेख नहीं किया गया है।

३-तिलकं मालती वाणस्तुलसी भृङ्गराजकम्।
तमालं शिवदुर्गार्थं निषिद्धविहितं भवेत्॥

(भविष्यपुराण)

जब शास्त्रोंसे विहित फूल न मिल पायें तो विहित-प्रतिषिद्ध फूलोंसे पूजा कर लेनी चाहिये[१]।

## शिव-पूजनके लिये विहित पत्र-पुष्प

भगवान् शंकरपर फूल चढ़ानेका बहुत अधिक महत्त्व है। बतलाया जाता है कि तपःशील सर्वगुणसम्पन्न वेदमें निष्णात किसी ब्राह्मणको सौ सुवर्ण दान[२] करनेपर जो फल प्राप्त होता है, वह भगवान् शंकरपर सौ फूल चढ़ा देनेसे प्राप्त हो जाता है[३]। कौन-कौन पत्र-पुष्प शिवके लिये विहित हैं और कौन-कौन निषिद्ध हैं, इनकी जानकारी अपेक्षित है। अतः उनका उल्लेख यहाँ किया जाता है—

पहली बात यह है कि भगवान् विष्णुके लिये जो-जो पत्र और पुष्प विहित हैं, वे सब भगवान् शंकरपर भी चढ़ाये जाते हैं। केवल केतकी—केवड़ेका निषेध है[४]।

शास्त्रोंने कुछ फूलोंके चढ़ानेसे मिलनेवाले फलका तारतम्य बतलाया है, जैसे दस सुवर्ण-मापके बराबर सुवर्ण-दानका फल एक आकके फूलको चढ़ानेसे मिल जाता है। हजार आकके फूलोंकी अपेक्षा एक कनेरका फूल, हजार कनेरके फूलोंके चढ़ानेकी अपेक्षा एक बिल्व-

---

१-विहितप्रतिषिद्धैस्तु विहितालाभतोऽर्चयेत्।

२-एक सुवर्ण=सोलह माशा या एक कर्ष।

३-तपःशीलगुणोपेते विप्रे वेदस्य पारगे।
दत्त्वा सुवर्णस्य शतं तत्फलं कुसुमस्य च॥
(वीरमित्रोदय, पृ० २०)

४-विष्णोर्यानीह चोक्तानि पुष्पाणि च पत्रिकाः।
केतकीपुष्पमेकं तु विना तान्यखिलान्यपि।
शस्तान्येव सुरश्रेष्ठ शंकराराधनाय हि॥ (नारद)

पत्रसे फल मिल जाता है और हजार बिल्वपत्रोंकी अपेक्षा एक गूमाफूल (द्रोण-पुष्प) होता है। इस तरह हजार गूमासे बढ़कर एक चिचिड़ा, हजार चिचिड़ों (अपामार्गों)-से बढ़कर एक कुशका फूल, हजार कुश-पुष्पोंसे बढ़कर एक शमीका पत्ता, हजार शमीके पत्तोंसे बढ़कर एक नीलकमल, हजार नीलकमलोंसे बढ़कर एक धतूरा, हजार धतूरोंसे बढ़कर एक शमीका फूल होता है। अन्तमें बतलाया है कि समस्त फूलोंकी जातियोंमें सबसे बढ़कर नीलकमल होता है[1]।

भगवान् व्यासने कनेरकी कोटिमें चमेली, मौलसिरी, पाटला, मदार, श्वेतकमल, शमीके फूल और बड़ी भटकटैयाको रखा है। इसी तरह धतूरेकी कोटिमें नागचम्पा और पुंनागको माना है[2]।

शास्त्रोंने भगवान् शंकरकी पूजामें मौलसिरी (बक-बकुल)-के फूलको ही अधिक महत्त्व दिया है[3]।

भविष्यपुराणने भगवान् शंकरपर चढ़ानेयोग्य और भी फूलोंके नाम गिनाये हैं—

करवीर (कनेर), मौलसिरी, धतूरा, पाढर[4], बड़ी कटेरी,

---

१-सर्वासां पुष्पजातीनां प्रवरं नीलमुत्पलम्॥

(वीरमित्रोदय, पूजाप्रकाश)

२-करवीरसमा ज्ञेया जातीबकुलपाटलाः।
श्वेतमन्दारकुसुमं सितपद्मं च तत्समम्॥
शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते।
नागचम्पकपुन्नागौ धत्तूरकसमौ स्मृतौ॥

३-सत्यं सत्यं पुनः सत्यं शिवं स्पृष्ट्वेदमुच्यते।
बकपुष्पेण चैकेन शैवमर्चनमुत्तमम्॥

(वीर० मि०, पू० प्र०)

४-'पाटला' का अर्थ 'पाढर' होता है। कुछ लोग इसका अर्थ 'गुलाब' बतलाते हैं।

कुरैया, कास, मन्दार, अपराजिता, शमीका फूल, कुब्जक, शंखपुष्पी, चिचिड़ा, कमल, चमेली, नागचम्पा[1], चम्पा, खस, तगर, नागकेसर, किंकिरात (करंटक अर्थात् पीले फूलवाली कटसरैया), गूमा, शीशम, गूलर, जयन्ती, बेला, पलाश, बेलपत्ता, कुसुम्भ-पुष्प, कुङ्कुम[2] अर्थात् केसर, नीलकमल और लाल कमल। जल एवं स्थलमें उत्पन्न जितने सुगन्धित फूल हैं, सभी भगवान् शंकरको प्रिय हैं[3]।

## शिवार्चामें निषिद्ध पत्र-पुष्प

कदम्ब, सारहीन फूल या कठूमर, केवड़ा, शिरीष, तिन्तिणी, बकुल (मौलसिरी), कोष्ठ, कैथ, गाजर, बहेड़ा, कपास, गंभारी, पत्रकंटक, सेमल, अनार, धव, केतकी, वसंत-ऋतुमें खिलनेवाला कंद-विशेष, कुंद, जूही, मदन्ती, शिरीष सर्ज और दोपहरियाके फूल भगवान् शंकरपर नहीं चढ़ाने चाहिये। वीरमित्रोदयमें इनका संकलन किया गया है[4]।

---

१-मूलमें 'कांचनम्' पद है। अमरकोषकारने बतलाया है कि स्वर्णके जितने नाम हैं वे 'नागचम्पा' फूलके वाचक हैं। अतः 'कांचन' का अर्थ नागचम्पा होता है। — 'काञ्चनाह्वयः।'(२। ४। ६५)

२-'..... अथ कुङ्कुमम्। काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतनम्।'
(अमरकोष २।·६। १२३)

३-वीरमित्रोदय, पू० प्र०।

४-कदम्बं फल्गुपुष्पं च केतकं च शिरीषकम्।
तिन्तिणी बकुलं कोष्ठं कपित्थं गृञ्जनं तथा॥
बिभीतकं च कार्पासं श्रीपर्णी पत्रकण्टकम्।
शाल्मली दाडिमीवर्ज्यं धातकी शंकरार्चने॥
केतकी चातिमुक्तं च कुन्दो यूथी मदन्तिका।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत्॥
(वीरमित्रोदय, पूजाप्रकाश)

## कदम्ब, बकुल और कुन्दपर विशेष विचार

इन पुष्पोंका कहीं विधान और कहीं निषेध मिलता है। अतः विशेष विचारद्वारा निष्कर्ष प्रस्तुत किया जाता है—

**कदम्ब**—शास्त्रका एक वचन है—'**कदम्बकुसुमैः शम्भुमुन्मत्तैः सर्वसिद्धिभाक्।**' अर्थात् कदम्ब और धतूरेके फूलोंसे पूजा करनेसे सारी सिद्धियाँ मिलती हैं। शास्त्रका दूसरा वचन मिलता है—

**अत्यन्तप्रतिषिद्धानि कुसुमानि शिवार्चने।**
**कदम्बं फल्गुपुष्पं च केतकं च शिरीषकम्॥**

अर्थात् कदम्ब तथा फल्गु (गन्धहीन आदि)-के फूल शिवके पूजनमें अत्यन्त निषिद्ध हैं। इस तरह एक वचनसे कदम्बका शिव-पूजनमें विधान और दूसरे वचनसे निषेध मिलता है, जो परस्पर विरुद्ध प्रतीत होता है।

इसका परिहार वीरमित्रोदयकारने कालविशेषके द्वारा इस प्रकार किया है। इनके कथनका तात्पर्य यह है कि कदम्बका जो विधान किया गया है, वह केवल भाद्रपदमास—मास-विशेषमें। इस पुष्प-विशेषका महत्त्व बतलाते हुए देवीपुराणमें लिखा है—

**'कदम्बैश्चम्पकैरेवं नभस्ये सर्वकामदा।'**

अर्थात् 'भाद्रपदमासमें कदम्ब और चम्पासे शिवकी पूजा करनेसे सभी इच्छाएँ पूरी होती हैं।'

इस प्रकार भाद्रपदमासमें 'विधि' चरितार्थ हो जाती है और भाद्रपदमाससे भिन्न मासोंमें निषेध चरितार्थ हो जाता है। दोनों वचनोंमें कोई विरोध नहीं रह जाता।

**'सामान्यतः कदम्बकुसुमार्चनं यत्तद् वर्षर्तुविषयम्। अन्यदा तु निषेधः। तेन न पूर्वोत्तरवाक्यविरोधः।'**

(वीरमित्रोदय, पूजाप्रकाश, पृ० २१६)

**बकुल ( मौलसिरी )**—यही बात बकुल-सम्बन्धी विधि-निषेधपर भी लागू होती है। आचारेन्दुमें 'बक' का अर्थ 'बकुल' किया गया है और 'बकुल' का अर्थ है—'मौलसिरी'। शास्त्रका एक वचन है—

**'बकपुष्पेण चैकेन शैवमर्चनमुत्तमम्।'**

दूसरा वचन है—

**'बकुलैर्नार्चयेद् देवम्।'**

पहले वचनमें मौलसिरीका शिव-पूजनमें विधान है और दूसरे वचनमें निषेध। इस प्रकार आपाततः पूर्वापर-विरोध प्रतीत होता है। इसका भी परिहार कालविशेषद्वारा हो जाता है, क्योंकि मौलसिरी चढ़ानेका विधान सायंकाल किया गया है—**'सायाह्ने बकुलं शुभम्।'** इस तरह सायंकालमें विधि चरितार्थ हो जाती है और भिन्न समयमें निषेध चरितार्थ हो जाता है।

**कुन्द**—कुन्द-फूलके लिये भी उपर्युक्त पद्धति व्यवहरणीय है। माघ महीनेमें भगवान् शंकरपर कुन्द चढ़ाया जा सकता है, शेष महीनोंमें नहीं। वीरमित्रोदयने लिखा है—

**कुन्दपुष्पस्य निषेधेऽपि माघे निषेधाभावः।**

## विष्णु-पूजनमें विहित पत्र-पुष्प

भगवान् विष्णुको तुलसी बहुत ही प्रिय हैं[१]। एक ओर रत्न, मणि तथा स्वर्णनिर्मित बहुत-से फूल चढ़ाये जायँ और दूसरी ओर तुलसीदल चढ़ाया जाय तो भगवान् तुलसीदलको ही पसंद करेंगे। सच पूछा जाय तो ये तुलसीदलकी सोलहवीं कलाकी भी समता नहीं कर सकते[२]।

---

१-अत्यन्तवल्लभा सा हि शालग्रामाभिधे हरौ॥
(पद्मपुराण)

२-मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च।
तुलसीदलमात्रस्य कलां नार्हन्ति षोडशीम्॥
(स्कन्दपुराण)

भगवान्को कौस्तुभ भी उतना प्रिय नहीं है, जितना कि तुलसीपत्र-मंजरी[१]। काली तुलसी तो प्रिय है ही किंतु गौरी तुलसी तो और भी अधिक प्रिय है[२]। भगवान्ने श्रीमुखसे कहा है कि यदि तुलसीदल न हो तो कनेर, बेला, चम्पा, कमल और मणि आदिसे निर्मित फूल भी मुझे नहीं सुहाते[३]। तुलसीसे पूजित शिवलिङ्ग या विष्णुकी प्रतिमाके दर्शनमात्रसे ब्रह्महत्या भी दूर हो जाती है[४]। एक ओर मालती आदिकी ताजी मालाएँ हों और दूसरी ओर बासी तुलसी हो तो भगवान् बासी तुलसीको ही अपनायेंगे[५]।

शास्त्रने भगवान्पर चढ़ानेयोग्य पत्रोंका भी परस्पर तारतम्य बतलाकर तुलसीकी सर्वातिशायिता बतलायी है, जैसे कि चिचिड़ेकी पत्तीसे भँगरैयाकी पत्ती अच्छी मानी गयी है तथा उससे अच्छी खैरकी और उससे अच्छी शमीकी। शमीसे दूर्वा, उससे अच्छा कुश, उससे अच्छी दौनाकी, उससे अच्छी बेलकी पत्तीको और उससे भी अच्छा तुलसीदल होता है[६]।

नरसिंहपुराणमें फूलोंका तारतम्य बतलाया गया है। कहा गया है कि दस स्वर्ण-सुमनोंका दान करनेसे जो फल प्राप्त होता है, वह एक

---

१-तावद्गर्जन्ति भूतानि कौस्तुभादीनि भूतले।
यावन्न प्राप्यते कृष्णा तुलसी विष्णुवल्लभा॥ (पद्मपु०)

२-श्यामापि तुलसी विष्णोः प्रिया गौरी विशेषतः। (पद्मपु०)

३-करवीरप्रसूनं वा मल्लिका वाथ चम्पकम्।
उत्पलं शतपत्रं वा पुष्पे चान्यतमं तु वा॥
सुवर्णेन कृतं पुष्पं राजतं रत्नमेव वा।
मम पादाब्जपूजायामनर्हं भवति ध्रुवम्॥ (स्कन्दपु०)

४-लिङ्गमभ्यर्चितं दृष्ट्वा प्रतिमां केशवस्य च।
तुलसीपत्रनिकरैर्मुच्यते ब्रह्महत्यया॥ (ब्रह्मपु०)

५-त्यक्त्वा तु मालतीपुष्पं पुष्पाण्यन्यानि च प्रभुः।
गृह्णाति तुलसीं शुष्कामपि पर्युषितां प्रभुः॥ (पद्मपु०)

६-अपामार्गदलं पुण्यं तस्माद् भृङ्गरजस्य च।
तस्माच्च खादिरं श्रेष्ठं शमीपत्रं ततः परम्॥
दूर्वापत्रं ततः श्रेष्ठं ततश्च कुशपत्रकम्।
ततो दमनकं श्रेष्ठं ततो बिल्वस्य पत्रकम्॥
बिल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम्॥ (पद्मपु०)

गूमाके फूल चढ़ानेसे प्राप्त हो जाता है। इसके बाद उन फूलोंके नाम गिनाये गये हैं, जिनमें पहलेकी अपेक्षा अगला उत्तरोत्तर हजार गुना अधिक फलप्रद होता जाता है, जैसे—गूमाके फूलसे हजार गुना बढ़कर एक खैर, हजारों खैरके फूलोंसे बढ़कर एक शमीका फूल, हजारों शमीके फूलोंसे बढ़कर एक मौलसिरीका फूल, हजारों मौलसिरी पुष्पोंसे बढ़कर एक नन्द्यावर्त, हजारों नन्द्यावर्तोंसे बढ़कर एक कनेर, हजारों कनेरके फूलोंसे बढ़कर एक सफेद कनेर, हजारों सफेद कनेरसे बढ़कर एक कुशका फूल, हजारों कुशके फूलोंसे बढ़कर वनवेला, हजारों वनवेलाके फूलोंसे एक चम्पा, हजारों चम्पाओंसे बढ़कर एक अशोक, हजारों अशोकके पुष्पोंसे बढ़कर एक माधवी, हजारों वासन्तियोंसे बढ़कर एक गोजटा, हजारों गोजटाओंके फूलोंसे बढ़कर एक मालती, हजारों मालती फूलोंसे बढ़कर एक लाल त्रिसंधि (फगुनिया), हजारों लाल त्रिसंधि फूलोंसे बढ़कर एक सफेद त्रिसंधि, हजारों सफेद त्रिसंधि फूलोंसे बढ़कर एक कुन्दका फूल, हजारों कुन्द-पुष्पोंसे बढ़कर एक कमल-फूल, हजारों कमल-पुष्पोंसे बढ़कर एक बेला और हजारों बेला-फूलोंसे बढ़कर एक चमेलीका फूल होता है[१]।

निम्नलिखित फूल भगवान्‌को लक्ष्मीकी तरह प्रिय हैं। इस बातको उन्होंने स्वयं श्रीमुखसे कहा है—

---

१. द्रोणपुष्पे तथैकस्मिन् माधवाय निवेदिते।
दत्त्वा दश सुवर्णानि यत्फलं तदवाप्नुयात्॥
द्रोणपुष्पसहस्रेभ्यः खादिरं वै प्रशस्यते।
खादिरपुष्पसहस्रेभ्यः शमीपुष्पं विशिष्यते॥
शमीपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते।
बकपुष्पसहस्राद्धि नन्द्यावर्तो विशिष्यते॥
नन्द्यावर्तसहस्राद्धि करवीरं विशिष्यते।
करवीरस्य पुष्पाद्धि श्वेतं तत्पुष्पमुत्तमम्॥
कुशपुष्पसहस्राद्धि वनमल्ली विशिष्यते।
वनमल्लीसहस्राद्धि चाम्पकं पुष्पमुत्तमम्॥
चाम्पकात् पुष्पसाहस्रादशोकं पुष्पमुत्तमम्।
अशोकपुष्पसाहस्राद् वासन्तीपुष्पमुत्तमम्।
वासन्तीपुष्पसाहस्राद् गोजटापुष्पमुत्तमम्॥

मालती, मौलसिरी, अशोक, कालीनेवारी (शेफालिका), बसंतीनेवारी (नवमल्लिका), आम्रात (आमड़ा), तगर, आस्फोत, बेल, मधुमल्लिका, जूही (यूथिका), अष्टपद, स्कन्द, कदम्ब, मधुपिंगल, पाटला, चम्पा, हृद्य, लवंग, अतिमुक्तक (माधवी), केवड़ा, कुरब, बेल, सायंकालमें फूलनेवाला श्वेत कमल (कह्लार) और अड़ूसा[१]।

कमलका फूल तो भगवान्‌को बहुत ही प्रिय है। विष्णुरहस्यमें बतलाया गया है कि कमलका एक फूल चढ़ा देनेसे करोड़ों वर्षके पापोंका भगवान् नाश कर देते हैं[२]। कमलके अनेक भेद हैं। उन भेदोंके फल भी भिन्न-भिन्न हैं। बतलाया गया है कि सौ लाल कमल चढ़ानेका फल एक श्वेत कमलके चढ़ानेसे मिल जाता है तथा लाखों श्वेत कमलोंका फल एक नीलकमलसे और करोड़ों नीलकमलोंका फल एक पद्मसे प्राप्त हो जाता है। यदि कोई भी किसी प्रकार एक भी पद्म चढ़ा दे, तो उसके लिये विष्णुपुरीकी प्राप्ति सुनिश्चित है[३]।

---

गोजटापुष्पसाहस्रान्मालतीपुष्पमुत्तमम् ।
मालतीपुष्पसाहस्रात् त्रिसंध्यं रक्तमुत्तमम्॥
त्रिसंध्यरक्तसाहस्रात् त्रिसंध्यश्वेतकं वरम्।
त्रिसंध्यश्वेतकसाहस्रात् कुन्दपुष्पं विशिष्यते॥
कुन्दपुष्पसहस्राद्धि शतपत्रं विशिष्यते।
शतपत्रसहस्राद्धि मल्लिकापुष्पमुत्तमम्॥
मल्लिकापुष्पसाहस्राद् जातीपुष्पं विशिष्यते॥

(नरसिंहपुराण)

१-मालतीबकुलाशोकशेफालीनवमल्लिकाः ।
आम्राततगरास्फोता मल्लिकामधुमल्लिकाः॥
यूथिकाष्टपदं स्कन्दं कदम्बं मधुपिङ्गलम्।
पाटला चम्पकं हृद्यं लवङ्गमतिमुक्तकम्॥
केतकं कुरबं बिल्वं कह्लारं वासकं द्विजाः।
पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे॥

(विष्णुधर्मोत्तर)

२-कमलेनैकेन देवेशं योऽर्चयेत् कमलाप्रियम्।
वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम्॥

३-रक्तोत्पलशतेनापि यत्फलं पूजिते नृणाम्।
श्वेतोत्पलेन चैकेन तत्फलं समवाप्नुयात्॥
श्वेतानामेकलक्षेण यत्फलं पूजिते भवेत्।
नीलोत्पलेन चैकेन तत्फलं समवाप्नुयात्॥

बलिके द्वारा पूछे जानेपर भक्तराज प्रह्लादने विष्णुके प्रिय कुछ फूलोंके नाम बतलाये हैं—'सुवर्णजाती (जाती), शतपुष्पा (शताह्वा), चमेली (सुमनाः), कुंद, कठचंपा (चारुपुट), बाण, चम्पा, अशोक, कनेर, जूही, पारिभद्र, पाटला, मौलसिरी, अपराजिता (गिरिशालिनी), तिलक, अड़हुल, पीले रंगके समस्त फूल (पीतक) और तगर[1]।

पुराणोंने कुछ नाम और गिनाये हैं, जो नाम पहले आ गये हैं, उनको छोड़कर शेष नाम इस प्रकार हैं—

अगस्त्य[2] आमकी मंजरी[3], मालती, बेला, जूही, (माधवी) अतिमुक्तक, यावन्ति, कुब्जई, करण्टक (पीली कटसरैया), धव (धातक), वाण (काली कटसरैया), बर्बरमल्लिका (बेलाका भेद) और अड़ूसा[4]।

---

नीलोत्पलयुतानां तु लक्षकोट्ययुतायुतैः।
समर्चिते हृषीकेशे यत्फलं देहिनां भवेत्॥
तत्फलं समवाप्नोति पद्मेनैकेन पूजकः।
किमन्यैर्बहुभिः पुष्पैर्नैवेद्यैर्वान्यसाधनैः॥
पद्मेनैकेन सम्पूज्य कृष्णं विष्णुपुरं व्रजेत्।
अवशेनापि चैकेन पद्मेन मधुसूदनम्।
यदा तदापि चाभ्यर्च्य नरो विष्णुपुरीं व्रजेत्॥

१-जातीशताह्वा सुमनाः कुन्दं चारुपुटं तथा।
बाणं च चम्पकाशोकं करवीरं च यूथिका॥
पारिभद्रं पाटला च बकुलं गिरिशालिनी।
तिलकं जम्बुवनजं पीतकं तगरं तथा॥
एतानि तु प्रशस्तानि कुसुमान्यच्युतार्चने।
सुरभीणि तथान्यानि (वर्जयित्वा तु केतकीम्)॥
(वीरमित्रोदय, पूजाप्रकाश)

२-अगस्त्यवृक्षसम्भूतैः कुसुमैरसितैः सितैः।
येऽर्चयन्ति हि देवेशं तैः प्राप्तं परमं पदम्॥
(स्कन्दपु०)

३-मञ्जर्यः सहकारस्य तथा देया जनार्दने॥
(विष्णुधर्मोत्तर)

४-मालती मल्लिका चैव यूथिका चातिमुक्तकः।
पाटला करवीरं च जया यावन्तिरेव च॥
कुब्जकस्तगरश्चैव कर्णिकारः करण्टकः।
चम्पको धातकः कुन्दो वाणो बर्बरमल्लिका॥
अशोकस्तिलकश्चम्पस्तथा चैवाऽऽरूषकः।
अमी पुष्पाकराः सर्वे शस्ता केशवपूजने॥
(अग्निपुराण)

विष्णुधर्मोत्तरमें बतलाया गया है कि भगवान् विष्णुकी श्वेत[१] पीले[२] फूलकी प्रियता प्रसिद्ध है, फिर भी लाल फूलोंमें दोपहरिया[३] (बन्धूक), केसर[४], कुंकुम और अड़हुलके फूल उन्हें प्रिय हैं, अतः इन्हें अर्पित करना चाहिये। लाल कनेर और बर्रे भी भगवान्‌को प्रिय हैं[५]। बर्रेका फूल पीला-लाल होता है।

इसी तरह कुछ सफेद फूलोंको वृक्षायुर्वेद लाल उगा देता है। लाल रंग होनेमात्रसे वे अप्रिय नहीं हो जाते, उन्हें भगवान्‌को अर्पण करना चाहिये[६]। इसी प्रकार कुछ सफेद फूलोंके बीच भिन्न-भिन्न वर्ण होते हैं। जैसे पारिजातके बीचमें लाल वर्ण। बीचमें भिन्न वर्ण होनेसे भी उन्हें सफेद फूल माना जाना चाहिये और वे भगवान्‌के अर्पण योग्य हैं[७]।

विष्णुधर्मोत्तरके द्वारा प्रस्तुत नये नाम ये हैं—तीसी[८], भूचम्पक[९], पुरन्ध्रि[१०], गोकर्ण[११] और नागकर्ण।

---

१-श्वेतैः पुष्पैः समभ्यर्च्य सर्वान् कामानवाप्नुयात्।
२-ऐश्वर्यं प्राप्नुयाल्लोके पीतैरेवं समर्चयन्॥
३-बन्धुजीवस्य पुष्पाणि रक्तान्यपि निवेदयेत्।
४-कुङ्कुमस्य तु पुष्पाणि बन्धुजीवस्य चाप्यथ।
५-अतिरिक्तैर्महापुष्पैः कुसुमैः करवीरकैः।
अर्चयित्वाच्युतं याति यत्रास्ति गरुडध्वजः॥
६-वृक्षायुर्वेदविधिना शुक्लं रक्तं कृतं च यत्।
तद्रक्तमपि दातव्यम् ......................................॥
७-मध्येऽन्यवर्णो यस्य स्याच्छुक्लस्य कुसुमस्य तु।
पुष्पं युक्तं तु विज्ञेयं मनोज्ञं केशवप्रियम्॥
८-अतसीकुसुमं तथा।
९-तथा भूचम्पकस्य च। इसमें पत्ते न रहनेपर भी जड़से फूल निकलता है—
'भूचम्पकः=यस्य पत्राभावेऽपि मूलात् पुष्पमुद्गच्छति।'
(वीरमित्रोदय, पूजाप्रकाश, पृ० ५५)
१०-तथा पुरन्ध्रिपुष्पैर्यः कुर्यात् पूजां मधुद्विषः।
११-गोकर्णनागकर्णाभ्याम्।

अन्तमें विष्णुधर्मोत्तरने पुष्पोंके चयनके लिये एक उपाय बतलाया है। कहा है कि जो फूल शास्त्रसे निषिद्ध न हों और गन्ध तथा रंग-रूपसे संयुक्त हों उन्हें विष्णुभगवान्‌को अर्पण करना चाहिये[१]।

## विष्णुके लिये निषिद्ध फूल

विष्णु भगवान्‌पर नीचे लिखे फूलोंको चढ़ाना मना है—

आक, धतूरा, कांची, अपराजिता (गिरिकर्णिका), भटकटैया, कुरैया, सेमल, शिरीष, चिचिड़ा (कोशातकी), कैथ, लांगुली, सहिजन, कचनार, बरगद, गूलर, पाकर, पीपर और अमड़ा (कपीतन)[२]।

घरपर रोपे गये कनेर और दोपहरियाके फूलका भी निषेध है[३]।

## सूर्यके अर्चनके लिये विहित पत्र-पुष्प

भविष्यपुराणमें बतलाया गया है कि सूर्यभगवान्‌को यदि एक आकका फूल अर्पण कर दिया जाय तो सोनेकी दस अशर्फिया

---

१-येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च।
तानि पुष्पाणि देयानि विष्णवे प्रभविष्णवे॥
(विष्णुधर्मोत्तर)

२-नार्कं नोन्मत्तकं काञ्चीं तथैव गिरिकर्णिकाम्।
न कण्टकाटिकापुष्पमच्युताय निवेदयेत्॥
कौटजं शाल्मलीपुष्पं शैरीषं च जनार्दने।
निवेदितं भयं शोकं निःस्वतां च प्रयच्छति॥ (विष्णुधर्मोत्तर)
कोशातिक्यर्कधत्तूरशाल्मलीगिरिकर्णिका।
कपित्थलाङ्गुलीशिंगुकोविदारशिरीषकैः॥
अज्ञानात् पूजयेद् विष्णुं नरो नरकमाप्नुयात्।
.................................... न्यग्रोधोदुम्बरप्लक्षसपिप्पलकपीतनैः॥
कोविदारैश्च तत्पत्रैर्नैव विष्णुं प्रपूजयेत्॥ (विष्णुरहस्य)

३-विष्णुधर्मोत्तरका एक वचन है—
करवीरस्य पुष्पाणि तथा धत्तूरकस्य च।
कृष्णं च कुटजं चार्कं नैव देयं जनार्दने॥

चढ़ानेका फल मिल जाता है[१]। फूलोंका तारतम्य इस प्रकार बतलाया गया है—

हजार अड़हुलके फूलोंसे बढ़कर एक कनेरका फूल होता है, हजार कनेरके फूलोंसे बढ़कर एक बिल्वपत्र, हजार बिल्वपत्रोंसे बढ़कर एक 'पद्म' (सफेद रंगसे भिन्न रंगवाला), हजारों रंगीन पद्म-पुष्पोंसे बढ़कर एक मौलसिरी, हजारों मौलसिरियोंसे बढ़कर एक कुशका फूल, हजार कुशके फूलोंसे बढ़कर एक शमीका फूल, हजार शमीके फूलोंसे बढ़कर एक नीलकमल, हजारों नील एवं रक्त कमलोंसे बढ़कर 'केसर और लाल कनेर' का फूल होता है[२]।

---

तात्पर्य यह कि करवीर, धतूर, काला कुटज तथा मदारका फूल विष्णुको नहीं चढ़ाना चाहिये। इसके विपरीत वचन इस प्रकार है—

करवीरस्य पुष्पेण रक्तेनाथ सितेन वा।
मुचुकुन्दस्य चैकेन सम्पूज्य गरुडध्वजम्॥

इसमें कनेर और मुचुकुन्दके फूलको विष्णुभगवान्‌पर चढ़ानेका विधान किया गया है। इस तरह परस्पर विरोध प्रतीत होता है। इसका समन्वय निबन्धकारोंने इस प्रकार किया है— निषेध-वचनमें जो 'करवीर' शब्द आया है उसका तात्पर्य 'गृहरोपित करवीर' है, अर्थात् घरमें रोपे गये करवीर-फूलको नहीं चढ़ाना चाहिये। इससे भिन्न कनेरोंको तो चढ़ाना ही चाहिये। इस अभिप्रायका एक वचन स्वयं विष्णुधर्मोत्तरमें मिलता है—

'न गृहे करवीरोत्थैः कुसुमैरर्चयेद्धरिम्।'

यहाँ कुछ पुष्प विहित-निषिद्ध हैं जिन्हें शास्त्रानुसार पूजनमें अन्य पुष्पोंके अभाव होनेपर चढ़ाया जा सकता है।

१-करवीरे नृपैकस्मिन्नकार्यं विनिवेदिते।
दत्त्वा दशसुवर्णस्य निष्कस्य लभते फलम्॥
(भविष्यपुराण)

२-जपापुष्पसहस्रेभ्यः करवीरं विशिष्यते।
करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते॥
बिल्वपत्रसहस्रेभ्यः पद्ममेकं विशिष्यते।
वीर पद्मसहस्रेभ्यो वकपुष्पं विशिष्यते॥
वकपुष्पसहस्रेभ्यः कुशपुष्पं विशिष्यते।
कुशपुष्पसहस्रेभ्यः शमीपुष्पं विशिष्यते॥
शमीपुष्पसहस्रेभ्यो नृप नीलोत्पलं वरम्।
रक्तोत्पलसहस्रेण नीलोत्पलशतेन च।
रक्तैश्च करवीरैश्च यस्तु पूजयते रविम्॥ (भविष्यपुराण)

यदि इनके फूल न मिलें तो बदलेमें पत्ते चढ़ाये और पत्ते भी न मिलें तो इनके फल चढ़ाये[१]।

फूलकी अपेक्षा मालामें दुगुना फल प्राप्त होता है[२]।

रातमें कदम्बके फूल और मुकुरको अर्पण करे और दिनमें शेष समस्त फूल। बेला दिनमें और रातमें भी चढ़ाना चाहिये[३]।

सूर्यभगवान्‌पर चढ़ाने योग्य कुछ फूल ये हैं—बेला, मालती, काश, माधवी, पाटला, कनेर, जपा, यावन्ति, कुब्जक, कर्णिकार, पीली कटसरैया (कुरण्टक), चम्पा, रोलक, कुन्द, काली कटसरैया (वाण), बर्बरमल्लिका, अशोक, तिलक, लोध, अरूषा, कमल, मौलसिरी, अगस्त्य और पलाशके फूल तथा दूर्वा[४]।

## कुछ समकक्ष पुष्प

शमीका फूल और बड़ी कटेरीका फूल एक समान माने जाते हैं। करवीरकी कोटिमें चमेली, मौलसिरी और पाटला आते हैं। श्वेत कमल और मन्दारकी श्रेणी एक है। इसी तरह नागकेसर, चम्पा, पुन्नाग और मुकुर एक समान माने जाते हैं[५]।

---

१-अलाभे सति पुष्पाणां पत्राण्यपि निवेदयेत्।
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत्॥ (भविष्यपुराण)

२-स्रग्भिश्च नृपशार्दूल तदेव द्विगुणं भवेत्। ( '' )

३-मुकुराणि कदम्बानि रात्रौ देयानि भानवे।
दिवा शेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका॥ ( '' )

४-मल्लिका मालती चैव दूर्वा काशोऽतिमुक्तकः।
पाटला करवीरश्च जपा यावन्तिरेव च॥
कुब्जकस्तगरश्चैव कर्णिकारः कुरण्टकः।
चम्पको रोलकः कुन्दो वाणो बर्बरमल्लिकाः॥
अशोकस्तिलको लोधस्तथा चैवाटरूषकम्॥
शतपत्राणि चान्यानि बकुलश्च विशेषतः।
... ..... ..... ..... अगस्तिकिंशुकौतद्वत्॥
(वीरमित्रोदय, पूजाप्रकाश, पृ० २५७)

५-शमीपुष्पबृहत्याश्च कुसुमं तुल्यमुच्यते।
करवीरसमा ज्ञेया जातीबकुलपाटलाः॥
श्वेतमन्दारकुसुमं सितपद्मं च तत्समम्।
नागचम्पकपुन्नागमुकुराश्च समाः स्मृताः॥ ( '' )

## विहित पत्र

बेलका पत्र, शमीका पत्ता, भँगरैयाकी पत्ती, तमालपत्र, तुलसी और काली तुलसीके पत्ते तथा कमलके पत्ते सूर्यभगवान्‌की पूजामें गृहीत हैं*।

## सूर्यके लिये निषिद्ध फूल

गुंजा (कृष्णला), धतूरा, कांची, अपराजिता (गिरिकर्णिका), भटकटैया, तगर और अमड़ा—इन्हें सूर्यपर न चढ़ाये। 'वीरमित्रोदय' ने इन्हें सूर्यपर चढ़ानेका स्पष्ट निषेध किया है, यथा—

**कृष्णलोन्मत्तकं काञ्ची तथा च गिरिकर्णिका।**
**न कण्टकारिपुष्पं च तथान्यद् गन्धवर्जितम्॥**
**देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा।**
**न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः॥**

**फूलोंके चयनकी कसौटी**—सभी फूलोंका नाम गिनाना कठिन है। सब फूल सब जगह मिलते भी नहीं। अतः शास्त्रने योग्य फूलोंके चुनावके लिये हमें एक कसौटी दी है कि जो फूल निषेध कोटिमें नहीं हैं और रंग-रूप तथा सुगन्धसे युक्त हैं उन सभी फूलोंको भगवान्‌को चढ़ाना चाहिये।

**येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च।**
**तानि पुष्पाणि देयानि भानवे लोकभानवे॥**

---

* बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च।
तमालपत्रं च हरे सदैव तपनप्रियम्॥
तुलसीकालतुलसी तथा रक्तं च चन्दनम्।
केतकी पद्मपत्रं च सद्यस्तुष्टिकरं रवेः॥
(वीरमित्रोदय, पूजाप्रकाश पृ० २५७)

# संक्षिप्त पुण्याहवाचन

यजमान—

ब्राह्मं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम्।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अमुककर्मणः पुण्याहं भवन्तो ब्रुवन्तु।

ब्राह्मण—

ॐ पुण्याहम्, ॐ पुण्याहम्, ॐ पुण्याहम्।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥

यजमान—

पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्।
ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अमुककर्मणः कल्याणं भवन्तो ब्रुवन्तु।

ब्राह्मण—

ॐ कल्याणम्, ॐ कल्याणम्, ॐ कल्याणम्।

ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याᳬं शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु।

यजमान—

सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता।
सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अमुककर्मणः ऋद्धिं भवन्तो ब्रुवन्तु।

ब्राह्मण—

ॐ कर्म ऋध्यताम्, ॐ कर्म ऋध्यताम्, ॐ कर्म ऋध्यताम्।

ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम। दिवं पृथिव्याम् अध्याऽरुहामाविदाम देवान्त्स्वर्ज्योतिः॥

यजमान—

स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा।
विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अमुककर्मणः स्वस्तिं भवन्तो ब्रुवन्तु।

ब्राह्मण—

ॐ आयुष्मते स्वस्ति, ॐ आयुष्मते स्वस्ति, ॐ आयुष्मते स्वस्ति।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

यजमान—

मृकण्डसूनोरायुर्यद्ध्रुवलोमशयोस्तथा।
आयुषा तेन संयुक्ता जीवेम शरदः शतम्॥

ब्राह्मण—

जीवन्तु भवन्तः, जीवन्तु भवन्तः, जीवन्तु भवन्तः।

ॐ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥

यजमान—

समुद्रमथनाज्जाता जगदानन्दकारिका।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः॥
शिवगौरीविवाहे तु या श्रीरामे नृपात्मजे।
धनदस्य गृहे या श्रीरस्माकं सास्तु सद्मनि॥

ब्राह्मण—

अस्तु श्रीः, अस्तु श्रीः, अस्तु श्रीः।

ॐ मनसः काममाकूतिं वाचः सत्यमशीय पशूनाः रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा।

यजमान—

प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्।
भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः॥
योऽसौ प्रजापतिः पूर्वे यः करे पद्मसम्भवः।
पद्मा वै सर्वलोकानां तन्नोऽस्तु प्रजापते॥

—पश्चात् हाथमें जल लेकर छोड़ दे और कहे—

भगवान् प्रजापतिः प्रीयताम्।

ब्राह्मण—

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयः स्याम पतयो रयीणाः स्वाहा॥

आयुष्मते स्वस्तिमते यजमानाय दाशुषे।
कृताः सर्वाशिषः सन्तु ऋत्विग्भिर्वेदपारगैः॥
या स्वस्तिर्ब्रह्मणो भूता या च देवे व्यवस्थिता।
धर्मराजस्य या पत्नी स्वस्तिः शान्तिः सदा तव॥
देवेन्द्रस्य यथा स्वस्तिर्यथा स्वस्तिर्गुरोर्गृहे।
एकलिंगे यथा स्वस्तिस्तथा स्वस्तिः सदा तव॥

ॐ आयुष्मते स्वस्ति, ॐ आयुष्मते स्वस्ति, ॐ आयुष्मते स्वस्ति।

ॐ प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु।

पुण्याहवाचनकर्मणः समृद्धिरस्तु।

# नित्यहोम-विधि

नित्यकर्मके पश्चात् पूर्वमुख बैठकर आसन-शुद्धिके बाद आचमन, प्राणायाम करके संकल्प करे। **ॐ अद्य** आदि देश-कालका उच्चारण कर **गोत्रः, प्रवरः, शर्मा ( वर्मा/ गुप्तः/ दासः ) अहं नित्यकर्मानुष्ठानसिद्धिद्वारा श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं च नित्यहोमं करिष्ये।**

**पञ्चभूसंस्कार**—संकल्प करनेके बाद वेदीके निम्नलिखित पाँच संस्कार करने चाहिये—

(१) तीन कुशोंसे वेदी अथवा ताम्रकुण्डका दक्षिणसे उत्तरकी ओर परिमार्जन करे तथा उन कुशोंको ईशान दिशामें फेंक दे **( दर्भैः परिसमुह्य )**। (२) गोबर और जलसे लीप दे **( गोमयोदकेनोपलिप्य )**। (३) स्रुवा अथवा कुशमूलसे पश्चिमसे पूर्वकी ओर प्रादेशमात्र (दस अंगुल लंबी) तीन रेखाएँ दक्षिणसे प्रारम्भ कर उत्तरकी ओर खींचे **( वज्रेणोल्लिख्य )**। (४) उल्लेखनक्रमसे दक्षिण अनामिका और अँगूठेसे रेखाओंपरसे मिट्टी निकालकर बायें हाथमें तीन बार रखकर पुनः सब मिट्टी दाहिने हाथमें रख ले और उसे उत्तरकी ओर फेंक दे **( अनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य )**। (५) पुनः जलसे कुण्ड या स्थण्डिलको सींच दे **( उदकेनाभ्युक्ष्य )**।

इस प्रकार पञ्चभूसंस्कार करके पवित्र अग्नि अपने दक्षिणकी ओर रखे और उस अग्निसे थोड़ा क्रव्याद-अंश निकालकर नैर्ऋत्यकोणमें रख दे। पुनः सामने रखी पवित्र अग्निको कुण्ड या स्थण्डिलपर निम्न मन्त्रसे स्थापित करे—**ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२ आ सादयादिह।**

—इस मन्त्रसे अग्नि-स्थापनके पश्चात् कुशोंसे परिस्तरण करे। कुण्ड या स्थण्डिलके पूर्व उत्तराग्र तीन कुश या दूर्वा रखे। दक्षिणभागमें पूर्वाग्र तीन कुश या दूर्वा रखे। पश्चिमभागमें उत्तराग्र तीन कुश या दूर्वा रखे। उत्तरभागमें पूर्वाग्र तीन कुश या दूर्वा रखे। अग्निको बाँसकी नलीसे प्रज्वलित करे। इसके बाद अग्निका ध्यान करे।

**अग्निका ध्यान—ॐ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यॉं२ आ विवेश।**

**ॐ मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा।**
**पितॄणां च नमस्तस्मै विष्णवे पावकात्मने॥**

—ऐसा ध्यान करके '**ॐ अग्ने शाण्डिल्यगोत्र मेषध्वज प्राङ्मुख मम सम्मुखो भव**'—इस प्रकार प्रार्थना करके '**पावकाग्नये नमः**' इस मन्त्रसे पञ्चोपचार-पूजन करे। गन्ध, पुष्प, धूप, दीप और नैवेद्य चढ़ाये। तदनन्तर घृतमिश्रित हविष्यान्नसे अथवा घृतसे हवन करे। सम्भव हो तो घृतसे स्रुवाद्वारा अग्निके जलते अंशपर तीन आहुति दे—

**१-ॐ भूः स्वाहा, इदमग्नये न मम।**

**२-ॐ भुवः स्वाहा, इदं वायवे न मम।**

**३-ॐ स्वः स्वाहा, इदं सूर्याय न मम।**

**(१) ॐ अग्नये स्वाहा, इदमग्नये न मम।**

**(२) ॐ धन्वन्तरये स्वाहा, इदं धन्वन्तरये न मम।**

**(३) ॐ विश्वेभ्यो देवेभ्यः स्वाहा, इदं विश्वेभ्यो देवेभ्यो न मम।**

**(४) ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम।**

**(५) ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम।**

—इस प्रकार गौतम महर्षिप्रोक्त पाँच आहुतियाँ देकर निम्न मन्त्रोंसे आहुतियाँ और दें—

**[ १ ] ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

**[ २ ] ॐ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

**[ ३ ] ॐ पितृकृतस्यैनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

**[ ४ ] ॐ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

**[ ५ ] ॐ एनस एनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

**[ ६ ] ॐ यच्चाहमेनो विद्वांश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा, इदमग्नये न मम।**

—इस प्रकार होम सम्पन्न कर पञ्चोपचार—गन्ध, पुष्प, धूप, दीप तथा नैवेद्यसे अग्निकी उत्तर-पूजा करके न्यूनतापूर्तिके लिये प्रार्थना करे—

**ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन स्वाहा॥** अन्तमें निम्नाङ्कित वाक्य कहकर कृत हवन-कर्म भगवान्‌को अर्पित करे—**अनेन नित्यहोमकर्मणा श्रीपरमेश्वरः प्रीयताम् न मम।**

**ॐ तत्सद् ब्रह्मार्पणमस्तु।**



